राजा। ओदारीअदु पुण्णिमाहरिणंको धरणीअले। * (घ)

[ भैरवानन्दो ध्यानं नाटयति ]।

[ ततः प्रविशति पटाक्षेपेण (ङ) नायिका। सर्वे आलोकयन्ति ]।

राजा। अहह! अच्चरिअं! अच्चरिअं!—

जं धोअंजणसोणलोअणजुअं लग्गालअग्गं मुहं
हत्थालंबिदकेसपल्लवचए दोलंति जं बिंदुणो।
जं एक्कं सिचअंचलं णिवसिदं तं ण्हाणकेलिट्ठिदा
आणीदा इअमब्भुदेक्कजणणी जोईसरेणामुणा? ॥†॥२४॥

अवि अ—

एक्केण पाणिणलिणेण णिवेसअंती
वत्थंचलं घणथणत्थलसंसमाणं।

* अवतार्यतां पूर्णिमाहरिणाङ्को धरणीतले।

† अहह! आश्चर्यम्! आश्चर्यम्!—

यत् धौताञ्जनशोणलोचनयुगं लग्नालकाग्रं मुखं
हस्तालम्बितकेशपल्लवचये दोलायन्ते यद्बिन्दवः।
यदेकं सिचयाञ्चलं निवसितं तत्स्नानकेलिस्थिता
आनीतेयमद्भुतैकजननी योगीश्वरेणामुना? ॥

(घ) अवतार्यतामिति।—पूर्णिमाहरिणाङ्कः पूर्णचन्द्र इत्यर्थः, तदेव आनीयता-मिति भावः।

(ङ) पटाक्षेपेण पटस्तिरस्करिणी तस्य आक्षेपेण अपसारणेन।

यदिति।—यत् यतः धौतम् अञ्जनं कज्जलं यस्य तथोक्तम्, अत एव शोणं रक्तं लोचनयुगं नयनयुगलं यस्मिन् तथाविधं, तथा लग्नानि सक्तानि अलकाग्राणि कुन्तलाग्र-भागाः यस्मिन् तथाभूतं मुखम्। यत् यतः हस्तेन आलम्बितः गृहीतः केशानां पल्लवचयः प्रान्तनिचयः तस्मिन् बिन्दवः, जलानामिति शेषः, दोलायन्ते कम्पन्ते इत्यर्थः। यत् यतः एकम् न द्वितीयम्, उत्तरीयवस्त्रवर्जनादिति भावः, सिचयस्य वसनस्य परिधेयस्य अञ्चलं निवसितम् आच्छादितं, तत् तस्मात् इयं स्नानकेलौ स्नानक्रीडायां स्थिता अद्भुतैकजननी चमत्कारहेतुभूता, विस्मयजननीत्यर्थः, रूपसम्पदेति भावः, कुत्रेति

चित्ते लिहिज्जदि ण कस्स वि संजमंतो
अस्सेण चंकमणदो चलिदं कडिल्लं ? * ॥ २७ ॥

विदूषकः ।—

ण्हाणावमुक्काभरणोच्चआए तरंगभंगक्खलदंसुआए ।
आद्दंसुओल्लासिहणुल्लदाए सुंदेरसव्वस्समिमीअ दिट्ठी ॥ † ॥ २८ ॥

नायिका । [ सर्वानवलोक्य सगर्वम् ] । एसो महाराओ को वि इमिणा गंभीरमहुरेण सोहासमुदाएण जाणिज्जदि । एसा वि एदस्स महादेवी तक्कीअदि अद्धणारीसरस्स विअ अकलिदा वि गोरी । एसो को वि जोईसरो । एस उण परिअणो । [ विचिन्त्य ] । ता किं ति एदस्स महिलासहिदस्स दिट्ठी मं बहु मण्णेदि ? ‡ (च) । [ इति वक्त्रं चोरयते ] ।

---

* अपि च—

एकेन पाणिनलिनेन निवेशयन्ती
वस्त्राञ्चलं घनस्तनस्थलस्रंसमानम् ।
चित्ते लिख्यते न कस्यापि संयच्छन्ती
अन्येन चङ्क्रमणतश्चलितं कटिवस्त्रम् ? ॥

† स्नानावमुक्ताभरणोच्चयायास्तरङ्गभङ्गस्खलदंशुकायाः ।
आर्द्रांशुकोल्लासितनुलतायाः सौन्दर्यसर्वस्वमस्या दृष्टिः ॥

‡ एष महाराजः कोऽप्यनेन गम्भीरमधुरेण शोभासमुदायेन ज्ञायते । एषाऽपि

---

शेषः, अमुना योगीश्वरेण भैरवानन्देन आनीता ? स्नानावसिरलङ्कारः, स्नानविधेः स्नानावशेषत्वात् ॥ २६ ॥

एकेनेति ।—एकेन पाणिनलिनेन करपङ्कजेन घनाभ्यां निबिडाभ्यां स्तनस्थलाभ्यां स्रंसमानं विगलत् वस्त्राञ्चलं निवेशयन्ती स्थानं नयन्तीत्यर्थः, अन्येन पाणिनलिनेन चङ्क्रमणतः पुनः पुनश्चलनात् चलितं स्खलितं कटिवस्त्रं संयच्छन्ती सम्भ्रती, धृयन्तीति शेषः, कस्य जनस्य चित्ते पटभूते इति भावः, नापि लिख्यते ? नैव चित्र्यते ? अपि तु सर्वस्यैव चित्तपटे आलिख्यत एवेत्यर्थः ॥ २७ ॥

स्नानेति ।—स्नानकाले अवमुक्तः परित्यक्तः आभरणोच्चयः अलङ्कारनिवहः यया

राजा । [विदूषकमपवार्य] (छ) एदाए—

जं मुक्का सवणंतरेण तरला तिक्खा कडक्खच्छडा

भंगाधिट्ठिअकेदअग्गिमदलद्दोणीसरिच्छच्छई ।

तं कप्पूररसेण णं धवलिदो ? ज्योण्हाअ णं ण्हाविदो ?

मुत्ताणं घणरेणुणा व्व छुरिदो ? जादो म्हि एत्थंतरे * ॥ ॥२९॥

अत्र महादेवी तर्क्यते अर्द्धनारीश्वरस्येव अर्द्धाङ्किताऽपि गौरी । एष कोऽपि योगीश्वरः । एष पुनः परिजनः । तत् किमित्येतस्य महिलावहितस्यापि दृष्टिर्मां बहु मन्यते ?

एतया:—

यत् मुक्ता श्रवणान्तरेण तरला तीक्ष्णा कटाक्षच्छटा

भृङ्गाधिष्ठितकेतकाग्रिमदलद्रोणीसदृक्षच्छविः ।

तत् कर्पूररसेन ननु धवलितो ? ज्योत्स्नया ननु स्नापितः ?

मुक्तानां घनरेणुनेव छुरितो ? जातोऽस्म्यत्रान्तरे ॥

---

तयोक्तायाः, तरङ्गा इव भङ्गाः विलासविशेषाः तैः अञ्चितम् अविनष्टं मण्डनं भूषणं यस्याः तथाभूतायाः, अलङ्कारपरित्यागेऽपि विलासविशेषैरेव सालङ्कारायाः इवेति भावः, तथा आर्द्रेण अंशुकेन वसनेन उल्लासिनी उद्भासिनी शोभाशालिनी वा तनुलता अतीव कोमला तनुरित्यर्थः यस्याः तयोक्तायाः अस्याः दृष्टिः सौन्दर्यसर्वस्वं सौन्दर्यवर्षिणीति भावः ॥ २८ ॥

(च) एष इति ।—एष कोऽपि महान् राजेति महाराजः, अनेन दृश्यमानेनेति भावः, गभीरमधुरेण दुरवगाहमनोहरेण । तर्क्यते अनुमीयते । अर्द्धनारीश्वरस्य अर्द्धाङ्गेन गौरी अपराङ्गेन हर इति रूपधारिणो महेश्वरस्येत्यर्थः, अर्द्धाङ्किताऽपि गौरीव ।

(छ) अपवार्य अन्यसङ्गोपनेन आच्छाद्येत्यर्थः, एतदेव जनान्तिकमुच्यते । तदुक्तं दशरूपके—"त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योऽन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥" इति ।

यदिति ।—श्रवणान्तरेण कर्णान्तरेण तरलाः चपलाः प्रेरितेव मुक्तेत्यर्थः, अधिष्ठितः आश्रितः, युक्त इत्यर्थः, यः केतकीकुसुमस्य अग्रदलः, स एव द्रोणी काष्ठाम्बुवाहिनी 'डोङ्गा' इति प्रसिद्धा, "द्रोणी काष्ठाम्बुवाहिनी" इत्यमरः ; एतेन नेत्रयोरतिविशालत्वं व्यज्यते ; तत्सदृशा सदृक्षी छविः कान्तिर्यस्याः तथाभूता, अत एव तीक्ष्ण

विदूषकः। अहो ! से रूअरेहा !! (ज)—

मज्झे मज्झं तिवलिवलिदं डिंभमुट्ठीअ गेज्झं
णो बाहूहिं रमणफलअं वेट्ठिदुं जादि दोहिं।
णेत्तक्खेत्तं तरुणिपसुईदिज्जमाणोवमाणं
ता पच्चक्खं मह विलिहिदुं जादि एसा ण चित्ते ॥ * ॥ ३० ॥

कधं ण्हाणधोविदविलेवणा समुत्तारिदविहूसणा वि रमणिज्जा !! † (झ)।

अहो ! अस्या रूपरेखा !! (क)—

मध्ये मध्यं त्रिवलिवलितं डिम्भमुष्ट्या ग्राह्यं
नो बाहुभ्यां रमणफलकं वेष्टितुं याति द्वाभ्याम्।
नेत्रक्षेत्रं तरुणीप्रसृतिदीयमानोपमानं
तत् प्रत्यक्षं मम विलिखितुं यात्येषा न चित्ते ॥

† कथं स्नानधौतविलेपना समुत्तारितविभूषणाऽपि रमणीया !!

---

चन्द्रमुदेत्यर्थः. कामसार इवेति भावः. कटाक्षच्छटा अपाङ्गावलोकनपरम्परा यत्र मुक्ता, मां प्रतीति शेषः, अवान्तरे अस्मिन्नेवावसरे तत् तस्मात् कर्पूररसेन कर्पूरजलेन धवलितः ननु किम् ? ज्योत्स्नया स्नापितो ननु किम् ? मुक्तानां घनरेणुनेव सान्द्रेण चूर्णेन छुरितः अनुलिप्तः किम् ? जातोऽस्मि। उत्प्रेक्षाऽलङ्कारः ॥ २९ ॥

(ज) अहो ! आश्चर्य्यम्। रूपरेखा सौन्दर्य्यपरम्परा।

मध्ये इति।—त्रिवलीभिः तिसृभिः रेखाभिः वलितं वेष्टितं मध्यं मध्यदेशः, डिम्भस्य बालकस्य मुष्ट्या ग्राह्यं ग्रहीतुं शक्यम्। रमणफलकं जघनपरिसर इत्यर्थः, रतिस्थानमिति यावत्, द्वाभ्यां बाहुभ्यां वेष्टितुम् आवरीतुं नो याति न शक्तो भवतीत्यर्थः। नेत्रक्षेत्रं चक्षुःपरिसरः तरुणी विशाला या प्रसृतिः वितस्तिः तया दीयमानम् उपमानं सादृश्यं यस्य तथाभूतं, तत् तस्मात् एषा मम प्रत्यक्षम्, अपिरत्राध्याहार्य्यः, परिदृश्यमानाऽपीत्यर्थः, चित्ते विलिखितुं न याति न शक्यते इति भावः, इति मन्ये सम्भावयामीत्यर्थः ॥ ३० ॥

(झ) कथमिति।—स्नानेन धौतं विलेपनम् अङ्गरागः यस्याः तथोक्ता। समुत्तारितानि अपसृतानि विभूषणानि यया तथाभूता।

अहवा—

जे रूअमुक्का वि विहूसयंति ताणं अलंकारवसेण सोहा ।
णिसग्गचंगस्स वि माणुसस्स सोहा समुम्मीलदि भूसणेहिं ॥*॥ २१॥

राजा । एदाए दाव एदं—

लावण्णं णवजच्चकंचणणिहं णेत्ताण दीहत्तणं
कण्णेहिं खलिदं कवोलफलआ दोखंडचंदोवमा ।
एसा पंचसरेण सज्जिदधणूदंडेण रक्खिज्जए
जेणं सोसणमोहणप्पहुदिणो विज्झंति मं मग्गणा ॥†॥ २२॥

* अथवा—
या रूपमुक्ता अपि विभूषयन्ति तासामलङ्कारवशेन शोभा ।
निसर्गसुन्दरस्यापि मानुषस्य शोभा समुन्मीलति भूषणैः ॥

† एतस्यास्तावदेतत् ।—
लावण्यं नवजात्यकाञ्चननिभं नेत्रयोर्दीर्घत्वं
कर्णाभ्यां स्खलितं कपोलफलकौ द्विखण्डचन्द्रोपमौ ।
एषा पञ्चशरेण सज्जितधनुर्दण्डेन रक्ष्यते
येन शोषणमोहनप्रभृतयो विध्यन्ति मां मार्गणाः ॥

या इति ।—या नार्य्यः रूपेण सौन्दर्य्येण मुक्ता विहीनाः अपि विभूषयन्ति भूषणैः अलङ्कुर्वन्ति, अङ्गानीति शेषः, तासाम् अलङ्कारवशेन विभूषणभूषणेनेवेत्यर्थः, शोभा, भवतीति शेषः, निसर्गसुन्दरस्य स्वभावसुन्दरस्य मानुषस्य शोभा च स्वतःसिद्धेति भावः, भूषणैः अलङ्कारैः समुन्मीलति अपि सम्यक् पुष्टिमेत्येवेत्यर्थः ॥ २१ ॥

लावण्यमिति ।—लावण्यं "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तलक्षणं नवम् अव्यवहृतमिति यावत्, जात्यं शोभनजातीयं यत् काञ्चनं स्वर्णं तन्निभं तत्सवर्णम् । नेत्रयोः दीर्घत्वं विशालत्वं कर्णाभ्यां कर्णयोरुद्देशेन, तत्प्राप्त्यर्थमिति भावः, तादर्थ्ये चतुर्थी, स्खलितं चलितम्, आकर्णव्याप्ते चक्षुषी इति भावः । कपोलफलकौ गण्डभागौ द्विखण्डचन्द्रः अर्द्धचन्द्रः तदुपमौ तत्समौ । सज्जितः संहितः धनुर्दण्डः येन तथाभूतः तेन पञ्चशरेण कामेन एषा रक्ष्यते शरत्वेन युज्यते, भातीति भावः, येन शरयोगेन हेतुना शोषण-मोहनप्रभृतयः "शोषणो मोहनश्चैव मादनस्तापनस्तथा । मारणश्चेति विज्ञेयाः शराः पञ्च मनोभुवः ॥" इत्युक्तेः, मार्गणाः शराः, एतत्कर्त्तृकनयनाद्यन्तर्गताः कटाक्षादय इति भावः, मां विध्यन्ति विद्धं कुर्वन्ति, व्यथयन्तीति भावः ॥ २२ ॥

विदूषकः। [विहस्य]। जाणे रच्छाए लोट्टदि से सोहारअणं (अ)। *

राजा। [विहस्य]। पिअवअस्स! कधेमि दे—

अंगं चंगं णिअगुणगणालंकिदं कामिणीणं
पच्छाअंती उण तणुसिरिं भादि णेवच्छलच्छी।
इत्थं जाणं अवअवगदा कावि संदेरमुद्दा
मण्णे ताणं वलइदधणू णिच्चभुच्चो अणंगो॥ † ॥ २२ ॥

अवि अ एदाए—
तहा रमणवित्थरो जह ण ठाइ कंचीलदा
तहा अ थणतुंगिमा जह ण एइ णाहिं मुहं।

* जाने रथ्याया लुठत्यस्याः शोभारत्नम्।

† प्रियवयस्य! कथयामि ते—
अङ्गं सुन्दरं निजगुणगणालङ्कृतं कामिनीनां
प्रच्छादयन्ती पुनस्तनुश्रियं भाति नेपथ्यलक्ष्मीः।
इत्थं यासामवयवगता काऽपि सौन्दर्यमुद्रा
मन्ये तासां वलयितधनुर्नित्यभृत्योऽनङ्गः॥

‡ अपि च, एतस्याः,—
तथा रमणविस्तरो यथा न तिष्ठति काञ्चीलता
तथा च स्तनतुङ्गिमा यथा नैति नाभिं मुखम्।

(अ) जाने इति।—अस्याः शोभारत्नं सौन्दर्यमणिः रथ्यायां लुठति पतितं तिष्ठति, रथ्यास्थितरत्नवत् सर्वं जनं रञ्जयतीति भावः।

अङ्गमिति।—सुन्दरम् अङ्गं निजगुणैः विभ्रमविलासादिभिः अलङ्कृतम्। नेपथ्यलक्ष्मीः परिच्छदशोभा पुनः कामिनीनाम्, अस्यासामिति भावः, तनुश्रियं शरीरशोभां प्रच्छादयन्ती आवृण्वती, पराभवन्तीति यावत्, भाति राजते। इत्थम् एवंरूपा यासां कामिनीनां काऽपि अनिर्वचनीया सौन्दर्यमुद्रा सौन्दर्यलक्ष्मीः, अनङ्गः कामः तासां वलयितं मण्डलीकृतम्, आकृष्टमित्यर्थः, धनुर्येन तथाभूतः सन्, नित्यभृत्यः चिरकिङ्कर इति मन्ये। भृत्यो यथा भर्तुराज्ञामन्तरेण तदाशयमेव ज्ञात्वा तत्कार्यं कुरुते, तथाऽसौ अनङ्गः आदेशवचनं विनैव कटाक्षपातजनिताशयविज्ञानेनैव कामिनो वशीकरोतीति भावः ॥ २२ ॥

तहा णअणवंङ्किमा जह ण किंपि कसुप्पलं

तहा अ मुहमुज्जलं दुसपिणी जहा पुंसमा॥‡॥१४॥

देवी। अज्ज कविंजल! पुच्छिअ जाण, का एसा त्ति। *

विदूषकः। [तां प्रति]। एहि मुद्धमुहि! उवविसिअ णिवेदेहि का तुमं त्ति?। †

राजा। आसणमिमीए। ‡ (ट)

विदूषकः। एदं मे उत्तरीअं आसणं। §

[विदूषकनायिके कथकासोपवेशने नाटयतः]।

विदूषकः। भोदि! संपदं कहिज्जदु। ¶

नायिका। अत्थि एत्थ विदब्भं णाम णअरं कुंतलेसु, तहिं सअलजणवल्लहो वल्लहराओ णाम राआ। **

---

तथा नयनवङ्किमा यथा न किमपि कर्णोत्पलं

तथा च मुखमुज्ज्वलं द्विषिणी यथा पूर्णिमा॥

* आर्य्य कपिञ्जल! पृष्ट्वा जानीहि, केयेति।

† एहि मुग्धमुखि! उपविश्य निवेदय का त्वमिति।

‡ आसनमस्यै।

§ एतन्मे उत्तरीयमासनम्।

¶ भवति! साम्प्रतं कथ्यताम्।

** अस्त्यत्र विदर्भं नाम नगरं कुन्तलेषु, तत्र सकलजनवल्लभो वल्लभराजो नाम राजा।

---

तथेति।—स्तनावस्तारः मध्यपरिसरविस्तारः तथा, यथा काञ्चीलता रशनाकलापः न तिष्ठति न पर्य्याप्नोतीत्यर्थः, स्तनयोः तुङ्गिमा तुङ्गत्वं तथा, यथा मुग्धं स्तनयोरिति भावः, नाभिं न एति न प्राप्नोति, न पश्यतीति भावः। नयनयोः वङ्किमा विशालता तथा, यथा कर्णोत्पलं न किमपि, निष्प्रयोजनमित्यर्थः, नैकयोरेव तादृश्येन, तदपकृष्टत्वादिति भावः। मुखञ्च तथा उज्ज्वलं दीप्तिमत्, यथा पूर्णिमा द्विषिणी पौर्णमासी प्रतिद्वन्द्विनीवेत्यर्थः॥ १४॥

(ट) षष्ठ्यर्थे चतुर्थी प्राकृतं, दोषतामिति शेषः।

देवी। [स्वगतम्]। जो मह माउस्सिआए पई होई। *

नायिका। तस्स घरिणी ससिप्पहा णाम। †

देवी। [स्वगतम्]। सा वि मे माउस्सिआ। ‡

नायिका। तेहिं अहं उप्पसोत्ति। §

देवी। [स्वगतम्]। ण क्खु सणिअह्वागब्भुप्पत्तिमंतरेण ईदिसी रूअरेहा होदि। ण क्खु वेदुरिअभूमिगब्भुप्पत्तिमंतरेण वेदुरिअ-मणिसलाआ णिप्पज्जई। [प्रकाशम्]। णं तुमं कप्पूरमंजरी ?। ¶

[नायिका सलज्जमधोमुखी तिष्ठति]।

देवी। एहि बहिणिए! आलिंगेसु मं। ** [इति परिष्वजते]।

कर्पूरमञ्जरी। अज्जे! कप्पूरमंजरीए एसो पढमो पणामो। ††

देवी। अज्ज भेरवाणंद! तुह प्पसादेण अपुव्वं संविधाणअं (ठ) अणुभविदं कप्पूरमंजरीदंसणेण; ता चिट्ठदु दाव एसा पंचदसदिअसाइं, पच्छा झाणविमाणेण (ड) णइस्सध। ‡‡

* यो मम मातृष्वसुः पतिर्भवति।

† तस्य गृहिणी शशिप्रभा नाम।

‡ साऽपि मे मातृष्वसा।

§ ताभ्यामहमुत्पन्नेति।

¶ न खलु शशिप्रभागर्भोत्पत्तिमन्तरेणेदृशी रूपरेखा भवति। न खलु वैदूर्यभूमि-गर्भोत्पत्तिमन्तरेण वैदूर्यमणिशलाका निष्पद्यते। ननु त्वं कर्पूरमञ्जरी ?।

** एहि भगिनि! आलिङ्गय माम्।

†† आर्ये! कर्पूरमञ्जर्या एष प्रथमः प्रणामः।

‡‡ आर्य भैरवानन्द! तव प्रसादेन अपूर्वं संविधानकमनुभूतं कर्पूरमञ्जरी-दर्शनेन; तत् तिष्ठतु तावदेषा पञ्चदशदिवसानि, पश्चात् ध्यानविमानेन नेष्यथ।

(ठ) संविधानकं व्यापारविशेषः।

(ड) ध्यानविमानेन ध्यानं समाधिरेव विमानम् आकाशसञ्चारी रथविशेषः तेन।

भैरवानन्दः। जं भणादि देई। *

विदूषकः। [राजानमुद्दिश्य]। भो वअस्स! अम्हे परं दुए वि बाहिरा एत्थ, जदो एदाणं मिलिदं कुडुंबअं वट्टदि, जदो इमोए दुवे वि बहिणिआओ। भेरवाणंदो उण एदाणं संजोअआरो अच्चिदो मण्णिदो अ। एसा वि महीअलसरस्सई अ कुट्टणी देहंतरेण देवी ज्जेव्व। † (ढ)

देवी। विअक्खणे! णिअजेट्ठबहिणिअं सुलक्खणं भणिअ भेरवाणंदस्स हिअअट्ठिआ सपज्जा कादव्वा। ‡

विअक्खणा। जं देवी आणवेदि। §

देवी [राजानं प्रति]। अज्जउत्त! पेसिहि मं, जेण अहं बहिणिआए एदावत्थाए णेवच्छकक्कोलीकाणिमित्तं अंतेउरं गमिस्सं। ¶

राजा। जुज्जदि चंपअलदाए कत्थूरिआकप्पूरेहिं आलवाल-परिपूरणं। ** (ण)

* यत् भणति देवी।

† भो वयस्य! आवां परं द्वावपि बाह्यावत्र, यत एतयोः मिलितं कुटुम्बकं वर्त्तते, यत इमे द्वे अपि भगिन्यौ। भैरवानन्दः पुनरेतयोः संयोगकारोऽर्चितो मानितश्च। एषाऽपि महीतलसरस्वती च कुट्टनी देहान्तरेण देव्येव।

‡ विचक्षणे! निजज्येष्ठभगिनिकां सुलक्षणां भणित्वा भैरवानन्दस्य हृदयेप्सिता सपर्य्या कर्त्तव्या।

§ यत् देवी आज्ञापयति।

¶ आर्य्यपुत्र! प्रेषय मां, येनाहं भगिन्या एतदवस्थाया नेपथ्यकक्कोलीका-निमित्तमन्तःपुरं गमिष्यामि।

** युज्यते चम्पकलतायाः कस्तूरीकर्पूरैरालवालपरिपूरणम्।

(ढ) बाह्याविति।—बाह्यौ बहिःस्थौ, सम्बन्धविहीनाविति यावत्। कुटुम्बकं सम्पर्कः। कुट्टनी महिला।

[ नेपथ्ये ] ।

वैतालिकयोरेकः । सुहाअ संझा भोदु देवस्स ।—

एदं वासरजीवपिंडसरिसं चंडंसुणो मडलं
को जाणादि कहिं पि संपदि गदं एतम्मि कालंतरे ।
जादा किं च इअं पि दीहविरहा सोएण णाहे गदे
मुच्छामुद्दिदलोअणे व्व णलिणी मीलंतपंकेरुहा ॥ * ॥ २५ ॥

द्वितीयः ।—

उग्घाडीअंति लीलामणिमअवलहीचित्तभित्तीणिवेसा
पल्लंका किंकरीहिं उदुसमअसुहा वित्थरिज्जंति झत्ति ।

---

सुखाय सन्ध्या भवतु देवस्य ।—

एतद्वासरजीवपिण्डसदृशं चण्डांशोर्मण्डलं
को जानाति क्वापि सम्प्रति गतमेतस्मिन् कालान्तरे ।
जाता किं चेयमपि दीर्घविरहा शोकेन नाथे गते
मूर्च्छामुद्रितलोचनेव नलिनी मीलत्पङ्केरुहा ॥

† उद्घाट्यन्ते लीलामणिमयवलभीचित्रभित्तिनिवेशाः
पर्यङ्काः किङ्करीभिः ऋतुसमयसुखा विस्तार्यन्ते झटिति ।

---

(क) वसुनीकर्पूरैः मगधाभिकर्पूरैः, पाठकाचार्ये तर्कसु नवरचनार्थम् आधार-विशेषणेऽर्थः ।

एतदिति ।—वासरस्य दिवसस्य जीवपिण्डसदृशं जीवनपुञ्जतुल्यं चण्डांशोः सूर्यस्य मण्डलम् एतस्मिन् कालान्तरे कालापगमे सम्प्रति क्वापि कस्मिन्नपि देशे गतं को जनः जानाति ? न कोऽपीत्यर्थः । किञ्च इयमपि नलिनी पद्मिनी नाथे भर्तरि गते प्रोषिते इत्यर्थः, दीर्घो विरहो यस्याः तथोक्ता दीर्घकालविरहिणी, मीलन्ति पङ्केरुहाणि पद्मानि यस्याः तथाभूता, अत एव शोकेन मूर्च्छया मुद्रिते निमीलिते लोचने यस्याः तथाभूतेव जाता किम ? इत्युत्प्रेक्षा ॥ २५ ॥

उद्घाट्यन्ते इति ।—लीलार्थं क्रीडार्थं मणिमय्यः रत्ननिर्मिताः, वलभ्यः गोपानस्यः, पारावतनिलया इति भावः, "गोपानसी तु वलभी छादने वक्रदारुणि" इत्यमरः ; चित्रभित्तिनिवेशाः चित्रगृहाणि च उद्घाट्यन्ते, दिवसे घोरातपेन जनानां क्लेशपरि-हाराय चित्रगवाक्षाणाम् आतपयोगे नातिव्यवहार्यत्वात् रात्रौ तेषामुद्घाटनमिति भावः

सेरंधीलोलहत्थांगुलिचलणवसा पट्टणादो पउट्टो
हुंकारो मंडपेसुं विलसदि महुरो वुड्ढतुंडंगणाणं ॥ † ॥ २६ ॥

राजा। अम्हे वि संझं वंदिदुं गमिस्सामो। *

[ इति निष्क्रान्ताः सर्वे ]।

इति प्रथमं जवनिकान्तरम्।

—०—

## द्वितीयं जवनिकान्तरम्।

[ ततः प्रविशति राजा प्रतीहारी च ]।

प्रतीहारी। [ परिक्रामितकेन ]। जदो जदो महाराओ।

राजा। [ कतिचित्पदानि गत्वा, तामनुसन्धाय ]—(क)

तहिं क्खु अवसरे—

सैरन्ध्रीलोलहस्ताङ्गुलिचलनवशात् पट्टनादः प्रवृत्तः
हुङ्कारो मण्डपेषु विलसति मधुरो वृद्धतुण्डाङ्गनानाम् ॥

वयमपि सन्ध्यां वन्दितुं गमिष्यामः।

* जयतु जयतु महाराजः।

† तस्मिन् खलु अवसरे—

विलासिनीभिः वाणीभिः ऋतुसमयसुलभाः कमलाननसुखकराः पर्यङ्काः झटिति शीघ्रं विस्तार्यन्ते सज्जीक्रियन्ते इति भावम्। सैरन्ध्रीणां परगृहवासिनीनां स्वाधीनानां लोलाः लोलाभिः चञ्चलाभिः हस्ताङ्गुलिभिः चलनवशात् वादनविशेषात् पट्टनादः पट्टानां मृदङ्गानां नादः ध्वनिः प्रवृत्तः उद्गतः। तथा मण्डपेषु गृहेषु वृद्धानां दीर्घजीवितानां, मानिनीनामिति भावः, तुण्डानां श्रोतमनसाञ्च अङ्गनानां नारीणां मधुरः मनोहरः हुङ्कारः प्रियेषु तर्जनरवः चाटुरवश्च विलसति प्रसरति ॥ २६ ॥

—————

(क) ताम् अनुसन्धाय तां कर्पूरमञ्जरीम् अनुसन्धाय अनुस्मृत्य।

ण ट्ठाणाहिं तिलांतरं वि चलिदा सुत्था णिदंबत्थली
थोउव्वेल्लवलीतरंगमुदरं कंठो तिरच्छि ट्ठिदो ।
वेणीए उण आणणेंदुवलणे लद्धं थणालिंगणं
जादा तीअ चउव्विधा तणुलदा णिज्झाअअंतीअ मं ॥(क)॥१॥

पडिहारी। [सगदम्]। कधं अज्ज वि सो ज्जेव्व तालीपत्त-संचओ, ताओ ज्जेव्व अक्खरपंतीओ; ता वसंतवण्णणेण सिढिलआमि से तग्गदं हिअआवेअं। (ख) [प्रकाशम्]। दिट्ठिं देउ महाराओ ईसीसि जरठाअमाणे कुसुमाअरम्मि। * (ग)—

न स्थानात्तिलान्तरमपि चलिता स्वस्था नितम्बस्थली
स्तोकोद्वेल्लद्वलीतरङ्गमुदरं कण्ठस्तिर्यक् स्थितः ।
वेण्या पुनराननेन्दुवलने लब्धं स्तनालिङ्गनं
जातास्तस्याश्चतुर्विधा तनुलता निध्यायन्त्या माम् ॥

* कथमद्यापि स एव तालीपत्रसञ्चयः, ता एव अक्षरपङ्क्तयः; तत् वसन्तवर्णनेन शिथिलयामि अस्य तद्गतं हृदयावेगम्। दृष्टिं ददातु महाराज ईषदीष-ज्जरठायमाने कुसुमाकरे।—

---

नेति।—मां निध्यायन्त्याः निरन्तरं ध्यायन्त्याः, आर्षो णिजन्तोऽयं प्रयोगः; तस्याः बालायाः तनुलता अङ्गयष्टी, कार्श्यं चापल्य-कोमलतादिगुणशालित्वं तन्वा लता-रोपणेन व्यज्यते; चतुर्विधा जाता, तथाहि, नितम्बमेव स्थली उन्नता भूमिः स्वस्था स्थिरैश्वर्यः, स्थानात् तिलान्तरमपि तिलमात्रमन्तरमपोऽव्यं, न चलिता, एतेन नितम्बस्य गौरवातिशयो व्यज्यते। उदरं स्तोकम् अल्पं यथा तथा उद्वेल्लन्त्यः प्रकटतां गच्छन्त्यः वल्यः रेखाविशेषा एव तरङ्गा यत्र तथोक्तम्। कण्ठः तिर्यक् तिरश्चीनं यथा तथा स्थितः, पार्श्वस्थ दर्शनादिति भावः। पुनः किन्तु आननमिन्दु-रिव तस्य वलने परावर्तने वेण्या केशपाशेन स्तनयोरालिङ्गनं लब्धं, तदानीं स्तनोपरि पतितत्वादिति भावः॥ १॥

(ख) कथमिति।—यद्यपि तालीपत्राणां "तालिपात" इति प्रसिद्धानां पत्राणां सञ्चयः समूहः, ता एव अक्षराणां वर्णानां पङ्क्तयः राजयः, इदानीमपि राज्ञः कर्पूर-मञ्जरीध्यानावेशः चलतीति भावः। शिथिलयामि श्लथयामि। तद्गतं तस्यां कर्पूर-

मूलाहिंतो परहुअवहूकंठमुद्दं दलंता
टेंता दीहं महुरिमगुणं जप्पिदे छप्पआणम् ।
संचारंता विरहिसु णवं पंचमं किंच राअं
राओम्मत्ता रइकुलघरा वासरा वित्थरंति ॥ † ॥ २ ॥

राजा । [सहर्षाकर्ण्यं सानुरागम्] ।—

आत्थाणीजणलोअणाणं बहुला लावण्णकल्लोलिणी
लीलाविब्भमहासवासणअरी सोभग्गपारट्ठिआ ।

मूलात्प्रभृति परभृतवधूकण्ठमुद्रां दलन्तो
ददतो दीर्घं मधुरिमगुणं जल्पिते षट्पदानाम् ।
सञ्चारयन्तो विरहिषु नवं पञ्चमं किञ्च रागं
रागोन्मत्ता रतिकुलगृहा वासरा विस्तीर्यन्ते ॥

‡ आस्थानीजनलोचनानां बहुला लावण्यकल्लोलिनी
लीलाविभ्रमहासवासनगरी सौभाग्यपारस्थिता ।

---

सखीभ्यां मतं ज्ञातम् । विषयान्तरे मनोनिवेशात् अत्र हृदयावेगस्य शैथिल्यं ज्ञापितं वसन्तवर्णनेनेत्युक्तम् ।

(ग) हट्टिमिति ।—ईषद्दीपन् अल्पाल्पं जरठायमाने विकसति कुसुमाकरे पुष्पसमये कुसुमानामाकरः उत्पत्तिस्थानं तस्मिन् उद्याने इत्यर्थः, "आकरो निवहोत्-पत्तिस्थानश्रेष्ठेषु कथ्यते" इति विश्वः ।

मूलाहिंतो इति ।—मूलात् आरम्भात् प्रभृति परभृतवधूनां कोकिलानां कण्ठमुद्रां कण्ठनिरोधं दलन्तः भिन्दन्तः, 'दल भेदे' इत्यस्मात् शतृप्रत्ययः ; कोकिलरवं जनयन्त इति भावः, षट्पदानां भ्रमराणां जल्पिते गुञ्जने दीर्घं मधुरिमगुणं माधुर्यगुणं, मधुरतामित्यर्थः, ददतः उत्पादयन्त इत्यर्थः, किञ्च विरहिषु नवं पञ्चमस्य, कोकिलोक्तिरिति शेषः, रागम् अनुरागं स्वरविशेषस्य सञ्चारयन्त उद्दीपयन्तः, "पुष्पसाधारणे काले पिकः कूजति पञ्चमम्" इत्युक्तः ; कोकिलेषु पञ्चमरागस्य विरहिषु च अभिनवानु-रागस्य उद्दीपकोऽयं काल इति भावः, रागेण रत्यावेशेन उन्मत्तम् उन्मादः, भावे क्तप्रत्ययः ; येषु तथोक्ताः, रतेः शृङ्गारस्य व्यभिचारस्य कुलगृहाः कुलमन्दिर-आवासा इत्यर्थः, वासरा वसन्तदिवसाः विस्तीर्यन्ते क्रमेण वर्धन्ते इत्यर्थः । मन्दाक्रान्ताच्-छन्दः ॥ २ ॥

णीलेंदीवरदीहिआ मह उणो सिंगारसंजीविणी
संजादा अह मम्महेण धणुहे तिक्खो सरो पुंखिदो॥ ॥ ३ ॥

[सोन्मादमिव]। दंसणक्खणादो पहुदि कुरंगाक्खी (घ)—

चित्ते चिहुट्टदि ण क्खुट्टदि सा गुणेसु
सेज्जासु लोट्टदि विसप्पदि दिम्मुहेसु।
बोल्लम्मि वट्टदि पअट्टदि कव्वबंधे
झाणेण तुट्टदि चिरं तरुणी चलाक्खी॥ * ॥ ४ ॥

नेत्रेन्दीवरदीर्घिका मम पुनः शृङ्गारसञ्जीविनी
सञ्जाताऽथ मन्मथेन धनुषि तीक्ष्णः शरः पुङ्खितः॥

* दर्शनक्षणात् प्रभृति कुरङ्गाक्षी—
चित्ते तिष्ठति न क्षीयते सा गुणेषु
शय्यायां लुठति विसर्पति दिङ्मुखेषु।
वचने वर्त्तते प्रवर्त्तते काव्यबन्धे
ध्यानेन त्रुट्यति चिरं तरुणी चलाक्षी॥

लावण्णेति।—लावण्यानी सभा तत्र ये जनाः सभासद इत्यर्थः, तेषां लोचनानि नेत्राणि तेषां मधुना पूर्णेति भावः, लावण्यसञ्जीविनी लावण्यमयी तरङ्गिणी, सभा-जनानां नेत्राणि लावण्यसलिलैरिव पूरयन्तीति भावः। लीलाविभ्रमेण यो हासः मन्दस्मितं तस्य वासनगरी, लीलाविभ्रमेण मृदुमन्दहासिनीति भावः। सौभाग्यस्य माहात्म्यस्य पारे अन्ते स्थिता सौभाग्यस्य परमोत्कर्षशालिनीत्यर्थः। नेत्रे एव इन्दीवरे नीलोत्पले तयोः दीर्घिका वापी, मम पुनः मम तु शृङ्गारसञ्जीविनी शृङ्गार-रसोद्दीपिनी सञ्जाता, सा कर्पूरमञ्जरीति हृदयस्थितेति शेषः। अथ अनन्तरमेव मन्मथेन कामेन धनुषि तीक्ष्णः अत्युग्रः शरः पुङ्खितः योजितः, तद्दर्शनेनैवाहं कामावेशवशवद आसं, तथापि पुनस्तत्परैवान्वेष इति भावः॥ ३॥

(घ) कुरङ्गाक्षी मृगनयना।

चित्ते इति।—चलाक्षी चञ्चलनेत्रा सा तरुणी चिरं सततं चित्ते तिष्ठति, गुणेषु सौन्दर्यादिषु न क्षीयते क्षीणैव न, अपि तु सर्वगुणशालिन्येव प्रतीयते इति भावः; शय्यायां लुठति शेते, मन्दार्त्त इति शेषः, दिङ्मुखेषु विसर्पति सञ्चरति, वचने वर्त्तते तदालापे प्रवीणेत्यर्थः, काव्यबन्धे काव्यरचनायां, सत्कविरिव रचयतीति भावः, प्रवर्त्तते

अवि अ—

जे तीअ तिक्खचलचक्खुतिभाअदिट्ठा
ते कामचंदमहुपंचममारणिज्जा ।
जेसुं उणो णिवडिदा सअला वि दिट्ठी
वट्टंति ते तिलजलांजलिदाणजोग्गा ॥ * ॥ ५ ॥

[ सस्मरवर्णनम् ]। अवि अ—

अग्गम्मि भिंगसरणी णअणाण तीए
मज्झे उणो कढिददुद्धतरंगमाला ।

* अपि च—

ये तया तीक्ष्णचलचक्षुस्त्रिभागदृष्टाः
ते कामचन्द्रमधुपञ्चममारणीयाः ।
येषु पुनर्निपतिता सकलाऽपि दृष्टिः
वर्तन्ते ते तिलजलाञ्जलिदानयोग्याः ॥

† अपि च—

अग्रे भृङ्गसरणिर्नयनयोस्तस्या
मध्ये पुनः क्वथितदुग्धतरङ्गमाला ।

प्रक्रमते, इत्थ ध्याने सततभावनायामिति यावत्, न तुष्यति न च्यवते, न मत्तः; अन्तरं गच्छतीत्यर्थः ॥ ४ ॥

ये इति ।—तया कान्तया ये जनाः तीक्ष्णस्य कटुनः चलस्य चपलस्य चक्षुषः त्रिभागेन तृतीयभागेन, क्वचित् कटाक्षस्य पूर्वार्धत्वं दृश्यते ; दृष्टाः अवलोकिताः, ते जनाः कामेन चन्द्रेण मधुना वसन्तेन पञ्चमेन कोकिलस्वरेण च, "पुष्पसाधारणे काले पिकः कूजति पञ्चमम्" इत्युक्तेः, मारणीयाः विनाशनीयाः, तेषां कामादिभिर्विनाशो भविष्यति, न तु साम्प्रतमिति भावः; भव्यार्थे अनीयप्रत्ययः ; कामादीनां चतुर्णां षड्वेन मरणानुकूलव्यापारसमवायसंयोगादवश्यमेव मरणं तेषां भवतीति द्योत्यते । पुनः किन्तु येषु जनेषु सकलाऽपि दृष्टिः तीक्ष्णचलेति भावः, निपतिता, ते तिलजलाञ्जलिदानयोग्याः तिलमिश्रजलाञ्जलिदानस्य तर्पणस्येति यावत्, योग्याः वर्तन्ते, मृता एवेति भावः ॥ ५ ॥

अग्रे इति ।—तस्याः नयनयोः अग्रे भृङ्गाणां सरणिः पङ्क्तिः, भृङ्गसरणीरिति

पच्छा अ से मरदि तंसणिरोक्खिदेसु
आअण्णमंडलिअचावधरो अणंगो ॥ † ॥ ६ ॥

[विचिन्त्य]। कधं चिरअदि प्पिअवअस्सो ? * ।

[प्रविश्य विदूषको विचक्षणा च परिक्रामतः]।

विदूषकः। अइ विअक्खणे ! सव्वं सच्चं एदं ? †

विचक्षणा। सव्वं सच्चअरं। ‡ (ङ)

विदूषकः। णाहं पत्तिज्जामि, जदो परिहाससीला क्खु तुमं। §

विचक्षणा। अज्ज ! मा एव्वं भण ; अण्णो वक्कवुत्तिकालो, अण्णो कज्जविआरकालो। ¶

विदूषकः। [पुरोऽवलोक्य]। एसो प्पिअवअस्सो हंसो विअ विमुक्कमाणसो, करी विअ मदक्खामो, मुणालदंडो विअ घणघम्ममिलाणो, दिणदीवो विअ विगलिअच्छाओ, प्पभाद-पुण्णिमाचंदो विअ पंडुरपरिक्खीणो चिट्ठदि। ** (च)

---

पश्चाच्च तस्याः स्मरति तिर्यङ्निरीक्षितेषु
आकर्णमण्डलितचापधरोऽनङ्गः ॥

* कथं चिरयति प्रियवयस्यः ?।

† अयि विचक्षणे ! सर्वं सत्यमिदम् ?

‡ सर्वं सत्यतरम्।

§ नाहं प्रत्येमि, यतः परिहासशीला खलु त्वम्।

¶ आर्य्ये ! मैवं भण ; अन्यो वक्रोक्तिकालः, अन्यः कार्य्यविचारकालः।

** एष प्रियवयस्यो हंस इव विमुक्तमानसः, करीव मदक्षामः, मृणालदण्ड-

---

भावः। पुनः किन्तु मध्ये ज्वलितस्य आवर्तितस्य दुग्धस्य तरङ्गमाला ऊर्मिरोलिः। पश्चात् तस्याः तिर्य्यक् निरीक्षितेषु अनङ्गः कामः आकर्णं मण्डलितं कृतं चापं धनुर्धरतीति तथाविधः सन् मरति स्मरति ॥ ६ ॥

(ङ) सत्यतरम् अतिशयेन सत्यमित्यर्थः।

(च) एष इति।—विमुक्तं विरहितं मानसं हृदयं सरश्च येन तथाभूतः। मद-

उभे। [परिक्रम्य]। जअदु जअदु महाराओ। *

राजा। वअस्स! कधं उण विअक्खणाए मिलिदो सि? †

विदूषकः। अज्ज विअक्खणा मए सह संधिं कादुं आअदा। किदसंधीए इमीए सह मतअंतस्स एत्तिआ वेला लग्गा। ‡ (क)

राजा। संधिकरणस्स किं फलं?। §

विदूषकः। एसा अहिमदजणप्पेसिदा लेहहत्था णं विअक्खणा आअदा। ¶ (ख)

राजा। [गन्धं सूचयित्वा]। केदईकुसुमगंधो विअ आआदि? **

विचक्षणा। केदईदललेहो ज्जेव्व एसो मह हत्थे। ††

---

इव घनघर्मक्षामः, दिनदीप इव विगलितच्छायः, प्रभातपूर्णिमाचन्द्र इव पाण्डुर-परिक्षीणस्तिष्ठति।

* जयतु जयतु महाराजः।

† वयस्य! कथं पुनर्विचक्षणया मिलितोऽसि?।

‡ अद्य विचक्षणा मया सह सन्धिं कर्तुमागता। कृतसन्ध्यैतया सह मन्त्रयमाणस्यैतावती वेला लग्ना।

§ सन्धिकरणस्य किं फलम्?।

¶ एषा अभिमतजनप्रेषिता लेखहस्ता ननु विचक्षणा आगता।

** केतकीकुसुमगन्ध इव आयाति।

†† केतकीदललेख एवैष मम हस्ते।

---

क्षामः मदेन मदनावेशजनितेन विकारेण दानवारिस्रवणेन च क्षामः क्षीणः। घनघर्म-क्षामः घनेन सान्द्रेण, बहुलेनेत्यर्थः, घर्मेण स्वेदोदयजनितेनेति भावः, ग्रीष्मेण च क्षामः क्लान्तः। विगलितच्छायः विगतप्रभः। पाण्डुरपरिक्षीणः पाण्डुरः पाण्डुवर्णः परिक्षीणः दुर्बलः।

(क) सन्धिं सम्मेलनम्। कृतसन्ध्या कृतसम्मेलनया। लग्ना गता।

(ख) एषेति।—एषा विचक्षणा अभिमतजनेन प्रियजनेन, केनचिदिति भावः, प्रेषिता प्रहिता। लेखहस्ता पत्रहस्ता।

राजा। महुसमए कधं केदईकुसुमं ?।

विचक्खणा। भैरवाणंदहिस्समंतप्पहावेण देवीभवणुज्जाणे केदईलदाए एक्को दाव प्पसवो दंसिदो। तस्स ताए देवीए दल-संपुडेहिं अज्ज हिंदोलअप्पभंजणीए चउत्थीए हरवल्लहा देवी अच्चिदा। अवरं च दलसंपुडजुअलं उण कणिट्ठबहिणीभाए कप्पूरमंजरीए पसादीकिदं। ताए वि एक्केण दलसंपुडेण भअवदी गोरी ज्जेव्व अच्चिदा। अवरं च—(भ)

केदईकुसुमपत्तसंपुडं पाहुडं तुअ सहीअ पेसिदं।
एण्णणाहिमसिवण्णसोहिणा तं सिलोअजुअलेण लंछिदं ।+॥१७॥

[इति लेखमर्पयति]।

मधुसमये कथं केतकीकुसुमम् ?

+ भैरवानन्दमन्त्रप्रभावेण देवीभवनोद्याने केतकीलतया एकस्तावत् प्रसवो दर्शितः। तस्य तया देव्या दलसम्पुटैरद्य हिन्दोलकप्रभञ्जन्यां चतुर्थ्यां हरवल्लभा देवी अर्चिता। अपरञ्च दलसम्पुटयुगलं पुनः कनिष्ठभगिन्यै कर्पूरमञ्जर्यै प्रसादीकृतम्। तयाऽपि एकेन दलसम्पुटेन भगवती गौरी एव अर्चिता। अपरञ्च—

केतकीकुसुमपत्रसम्पुटं प्राभृतं तव सख्या प्रेषितम्।
एणनाभिमसीवर्णशोभिना तत् श्लोकयुगलेन लाञ्छितम् ॥

---

(भ) भैरवेति।—देवीभवनस्य उद्याने उपवने। प्रसवः कुसुमम्। तस्य प्रसवस्य। दलसम्पुटैः दलसञ्चयैः। हिन्दोलकप्रभञ्जन्यां हिन्दोलकं भगवतो दोल-महोत्सवः तत्प्रभञ्जनी तद्भङ्गकारिणीत्यर्थः तस्यां, चतुर्थ्यां, तिथाविति शेषः, अत्र देशे फाल्गुनपौर्णमासीमारभ्य चतुर्थीपर्य्यन्तं दोलमहोत्सवः क्रियते, ततश्च तन्निवृत्तिरित्याचार इति भावः। हरवल्लभा गौरी। तया कर्पूरमञ्जर्या।

केतकीति।—तव सख्या कर्पूरमञ्जर्य्येति भावः, मदिच्छया भगिनीत्वसम्बन्धेन अस्याः सखीत्वमिति भावः, एणनाभिर्मृगनाभिः, कस्तूरीत्यर्थः, एव मसी लेख्योप-योगिनिर्यासविशेषः, सैव वर्णः तेन शोभिना लिखितेनेति भावः, श्लोकयुगलेन लाञ्छितम् अलङ्कृतं केतकीकुसुमपत्रसम्पुटं तव प्राभृतं प्रेषितम् उपढौकितम् ॥ १७ ॥

राजा । [ पत्रार्थं वाचयति ] ।—

हंसिं कुंकुमपंकपिंजरतणुं काऊण जं वंचिदो
तब्भत्ता किल चक्कवाअघरिणी एसत्ति मण्णंतओ ।
एदं तं मह दुक्कदं परिणदं दुक्खाणं सिक्खावणं
एक्कत्थो वि ण जासि जेण विसअं दिट्ठिप्पहाअस्स वि ॥८॥

[ द्विचिन्तयित्वा ] । एदाइं ताइं मअणरसाअणाक्खराइं । * (अ)

विचक्षणा । दुदीओ उण मए प्पिअसहीए अवत्थाणिवेदओ कदुअ सिलोओ लिहिदो एत्थ, तं वाचेदु महाराओ ।†

राजा । [ वाचयति ] ।—

सह दिवसणिसाइं दीहरा सासदंडा

* हंसीं कुङ्कुमपङ्कपिञ्जरतनुं कृत्वा यद्वञ्चितः
तद्भर्ता किल चक्रवाकगृहिणीयमिति मन्यमानः ।
एतत्तन्मम दुष्कृतं परिणतं दुःखानां शिक्षकं
एकस्थोऽपि न यासि येन विषयं दृष्टिविभागस्यापि ॥
एतानि तानि मदनरसायनाक्षराणि ।

† द्वितीयः पुनर्मया प्रियसख्या अवस्थानिवेदकः कृत्वा श्लोको लिखितोऽत्र, तं वाचयतु महाराजः ।

हंसीमिति ।—हंसीं स्वानुरक्तामिति भावः, कुङ्कुमपङ्केन कुङ्कुमद्रवेण पिञ्जरा पिङ्गला तनुरङ्गं यस्याः तथाभूतां तां कृत्वा, स्वर्थमिति भावः, चक्रवाकस्य गृहिणी प्रिया चक्रवाकीत्यर्थः, एषा तत्सवर्णत्वादिति भावः, इति मन्यमानः जानन् तस्याः हंस्या भर्ता हंस इत्यर्थः, यत् यथा वञ्चितः विप्रलब्धः प्रतारित एव, दैवेनेति शेषः, यथा हंसीमनुरागिणीमपि परकीयां मन्यमानः तां त्यजतीति भावः, तत् तथा दुःखानां शिक्षकं दायकमिति भावः, एतत् मम दुष्कृतं परिणतं परिपाकं गतं, येन दुष्कृतपरिणामेन एकस्थोऽपि एकस्थानस्थितोऽपि त्वं दृष्टिविभागस्यापि, ममेति शेषः, विषयं गोचरं न यासि चक्षुषापि न दृश्यसे इति भावः । त्वयि अनुरक्तां मां त्वं यत् न सम्भावयसि तन्ममैव दुष्कृतपरिणाम इति निष्कर्षः ॥ ८ ॥

( अ ) मदनेति ।—मदनस्य कामस्य रसायनानि औषधविशेषा एव अक्षराणि वर्णानीत्यर्थः ।

सह मणिवलएहिं बाहधारा गलंति।
सुहअ! तुअ विओए तीअ उव्वेविरीए
सह अ तणुलदाए दुब्बला जीविदासा ॥ * ॥ ९ ॥

विचक्षणा। एत्थ ज्जेव एदाए अवत्थाए मह जेट्ठबहिणिआए सुलक्खणाए उम्मादिआए अविअ सिलोओ किदो, तं महाराओ सुणादु। (ट) [पठति]।—

णीसासा हारजट्ठीसरिसपसरणा चंदणं फोडकारी
चंदो देहस्स दाहो सुमरणसरिसो हाससोहा मुहम्मि।
अंगाणं पंडुभाओ दिवससमिकलाकोमलो किं च तीए
णिच्चं बाप्पप्पवाहो तुह सुहअ! किदे होंति कुल्लाहिं तुल्ला ॥ † ॥ १० ॥

* सह दिवसनिशाभ्यां दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति।
सुभग! तव वियोगे तस्या उद्वेगिन्याः
सह च तनुलतया दुर्बला जीविताशा ॥

† इहैव एतस्यां अवस्थायां मम ज्येष्ठभगिन्या सुलक्षणया उन्मादिन्या भूत्वा श्लोकः कृतः, तं महाराजः शृणोतु।

निःश्वासा हारयष्टिसदृशप्रसरणाश्चन्दनं स्फोटकारी
चन्द्रो देहस्य दाहः स्मरणसदृशो हासशोभा मुखेऽपि।
अङ्गानां पाण्डुभावो दिवसशशिकलाकोमलः किञ्च तस्याः
नित्यं बाष्पप्रवाहस्तव सुभग! कृते भवन्ति कुल्याभिस्तुल्याः ॥

हे सुभग! वल्लभ! तव वियोगे विरहे तस्याः कर्पूरमञ्जर्याः दिवसनिशाभ्यां सह श्वासा एव दण्डाः दण्डवत् दीर्घा आयताः, आयता इति यावत्, दिवसो दीर्घः निशा दीर्घा श्वासाश्च दीर्घा इत्यर्थः, बाष्पधारा अश्रुप्रवाहाः मणिवलयैः रत्नवलयैः सह गलन्ति पतन्ति, विरहव्यथातिशयात् विरहकार्श्याच्चेति भावः, जीविताशा च जीवनधारणस्य आशा च उद्वेगिन्याः रणरणकवत्याः तनुलतया सह दुर्बला क्षीणा, तनुलता तथा क्षीणा यथा जीविताशा नास्ति तस्याः इति भावः ॥ ९ ॥

(ट) इहैव अस्मिन्नेव पत्रपुटे इत्यर्थः, उन्मादिन्या निर्वेदवत्या।

हे सुभग! तव कृते निमित्तं तस्याः निःश्वासाः हारयष्टेः हारलतायाः सदृशं

मृणालो बाणालो जलदि अ जलाद्दा तणुलदा
वरिट्ठा जं दिट्ठा कमलवदणा सा सुणअणा ॥ § ॥ ११ ॥

राजा । वअस्स ! तुमं पि थोएण चंदणरसेण समालहिज्जसि ; ता कहेहि तस्सा किंपि वुत्तंतं । अध अंतेउरं णइअ देवीए किं किदं तीए ? * (ड)

विदूषकः । विअक्खणे ! किं किदं, कहेहि । †

विचक्षणा । देव ! मंडिदा टिक्किदा भूसिदा तोसिदा अ । ‡ (ढ)

राजा । कधं विअ ? §

मृणाली बाणाली ज्वलति च जलार्द्रा तनुलता
वरिष्ठा यत् दृष्टा कमलवदना सा सुनयना ॥

* वयस्य ! त्वमपि स्तोकेन चन्दनरसेन समालभ्यसे ; तत् कथय तस्याः कमपि वृत्तान्तम् । अथान्तःपुरं नीत्वा देव्या किं कृतं तस्याः ?

† विचक्षणे ! किं कृतं, कथय ।

‡ देव ! मण्डिता तिलकिता भूषिता तोषिता च ।

§ कथमिव ?

यत् यतः सा कमलवदना पद्ममुखी वरिष्ठा सर्वाङ्गसुन्दरी सुनयना दृष्टा, ततः चान्द्री ज्योत्स्ना चन्द्रिका उष्णा उत्तापिनीत्यर्थः, चन्दनरसः गरलसदृशः विषवत् कटुरित्यर्थः । हारः मौक्तिकस्रक् अतीव भारः समभवत् । दक्षिणपवना मिश्रावाताः देहं तपन्तीति तथाभूताः, मृणाली मृणालसता बाणाली शरपरम्परा, जलेन चार्द्रा क्लिन्ना तनुलता ज्वलति च ॥ ११ ॥

(ड) स्तोकेन अल्पेन चन्दनरसेन समालभ्यसे संलिप्यसे, त्वमपि किञ्चित् वार्त्तावित्तं प्राप्नोषीति भावः ।

(ढ) मण्डितेति ।—मण्डिता अलङ्कृता, तिलकिता दत्ततिलका, भूषिता शोभिता, मुहुः परिष्वङ्गदानेनेति भावः ।

विअक्खणा ।—

उभएसु वि सवणेसुं णिवेसिदं रअणकुंडलजुअं से । *

राजा ।—

ता वदणमम्महरहो दोहिं वि चक्केहिं चंकमिदो ॥ † ॥१८॥

विअक्खणा ।—

अंजणजणिदपसाहणाइं जादाइं तीअ णअणाइं । ‡

राजा ।—

उप्पुंखिअ णवकुवलअसिलीमुहे पंचबाणस्स ॥ § ॥१९॥

विअक्खणा ।—

कुडिलालआणं माला ललाडफलअग्गसंगिणी रइदा । ¶

राजा ।—

ता ससिबिंबस्सोवरि वट्टइ मज्झम्मि किसणसारंगो ॥**॥२०॥

* उभयोरपि श्रवणयोर्निवेशितं रत्नकुण्डलयुगं तस्याः ।

† तद्वदनमन्मथरथो द्वाभ्यामिव चक्राभ्यां चङ्क्रमितः ॥

‡ अञ्जनजनितप्रसाधने जाते तस्या नयने ।

§ उत्पुङ्खितौ नवकुवलयशिलीमुखौ पञ्चबाणस्य ॥

¶ कुटिलालकानां माला ललाटफलकाग्रसङ्गिनी रचिता ।

** तच्छशिबिम्बस्योपरि वर्तते मध्ये कृष्णसारङ्गः ॥

तव गुप्तो तिष्ठति तदा सम्प्रति पुष्पातीति परिशिष्टः । तत् तदा तारकानिकरः नक्षत्रराजिः पङ्क्तिभिः नक्षत्राकारैव मुखमिव चन्द्रं सेवते अनुगच्छति इत्यर्थः ॥१७॥

तस्याः उभयोः श्रवणयोः कर्णयोः रत्नकुण्डलयुगं निवेशितं निहितम् । तत् तदा वदनमेव मन्मथस्य रथः द्वाभ्यामपि चक्राभ्यां कुण्डलरूपाभ्यामिति भावः, चङ्क्रमितः पुनः पुनरतिशयेन चलितः ॥ १८ ॥

तस्याः नयने जात्यं सुजातमित्यर्थः, यत् अञ्जनं कज्जलं तेन जनितं प्रसाधनम् अलङ्करणं ययोः तथाभूते जाते, पञ्चबाणस्य कामस्य नवौ कुवलये नीलोत्पले शिलीमुखौ शरौ उत्पुङ्खितौ सज्जितौ । कुवलयानां नेत्रसाम्येन कामोद्दीपकत्वेन उत्पुङ्खितत्वमिति व्यज्यते ॥ १९ ॥

कुटिलानां भङ्गिमताम् अलकानां कुन्तलानां माला समूहः ललाटफलकं ललाटदेशः तस्य अग्रस्य संसर्गः अस्ति यस्याः तथाभूता रचिता कृता, केशपाशः संवलित इत्यर्थः । तत् तदा मध्ये स्थितः कृष्णसारङ्गः कृष्णमृगः शशिबिम्बस्य

विचक्षणा ।—

घणसारतारणअणाइ गूढकुसुमोच्चओ चिउरभारो । *

राजा ।—

ससिराहुमल्लजुज्झं विअ दंसिअमेणणअणाए ॥ † ॥ २१ ॥

विचक्षणा ।—

इअ देवीअ जहिच्छं पसाहणेहिं पसाहिदा कुमरी । ‡

राजा ।—

सा केलिकाणणमही विब्भूसिआ सुरहिलच्छीए ॥ § ॥ २२ ॥

विदूषकः । देवि ! एदं परमत्थं विण्णवीअदि ।—

जेस्सा दिट्ठी तरलधवला कज्जलं तिस्स जोग्गं ?

जा वित्थिण्णत्थणकलसिणी सोहदे तिस्स हारो ? ।

* घनसारतारनयनाया गूढकुसुमोच्चयश्चिकुरभारः ।

† शशिराहुमल्लयुद्धमिव दर्शितमेणनयनायाः ॥

‡ इति देव्या यथेच्छं प्रसाधनैः प्रसाधिता कुमारी ।

§ तत्र केलिकाननमही विभूषिता सुरभिलक्ष्म्या ॥

¶ देवि ! एतत् परमार्थं विज्ञाप्यते ।—

यस्या दृष्टिस्तरलधवला कज्जलं तस्या योग्यम् ?

या विस्तीर्णस्तनकलशिनी शोभते तस्या हारः ? ।

चन्द्रमण्डलस्य उपरि वसन्तं तिष्ठति । मुखस्य चन्द्रसाम्यं केशस्य कलङ्कसाम्यमिति व्यज्यते ॥ २० ॥

घनः निबिडः, अतिमात्र इत्यर्थः, सारः उत्कर्षः यस्याः तादृशी तारा कनीनिका ययोः तथाभूते नयने यस्याः तथोक्तायाः, चिकुरभारः कबरीबन्धः, गूढः अन्तर्गतः कुसुमानाम् उच्चयः निचयः यस्य यत्र वा तथोक्तः । एणनयनायाः मृगाक्ष्याः शशिराहुः चन्द्रसैंहिकेययोः मल्लयुद्धं द्वन्द्वयुद्धं दर्शितं प्रकटितम् । कुसुमोच्चयस्य चन्द्रसाम्यं चिकुरभारस्य राहुसाम्यमिति व्यज्यते ॥ २१ ॥

इतीत्थं देव्या राजमहिष्या कुमारी कर्पूरमञ्जरी यथेच्छम् इच्छानुसारेण प्रसाधनैः अलङ्कारैः प्रसाधिता अलङ्कृता । तत्र तर्हि सुरभिलक्ष्म्या वसन्तश्रिया सुगन्धसम्पदा वा केलिकाननमही क्रीडोद्यानभूमिः विभूषिता सज्जिता । कुमार्याः क्रीडाकाननतया क्रीडोद्यानभूमिसाम्यं देव्याश्च सुरभिलक्ष्मीसाम्यं व्यज्यते ॥ २२ ॥

यस्याः दृष्टिः तरला चपला धवला च, कज्जलम् अञ्जनं तस्याः दृष्टेः योग्यम् ? नैव

चक्काआरे रमणफलहे कोवि कंचीमउट्टो
जिस्सा तिस्सा उण किं भणिमो भूसणं दूसणं अ ॥ ¶ ॥ २३ ॥

राजा । [ पुनस्तामनुवर्ण्य ] ।—

तिवलितरलिअणाहीबाहुमूलेसु लग्गं
थणकलसणिअंबाडंबरेसुम्भमंतं ।
जहणविडंमिमीए लिक्कणं ण्हाणवत्तं
पिसुणदि तणुजट्ठीचंगिमं लंगिमं च ॥ * ॥ २४ ॥

चक्राकारे रमणफलके कोऽपि काञ्च्याडम्बरो
यस्यास्तस्याः पुनरपि भणामो भूषणं दूषणञ्च ॥
त्रिवलीवलितनाभीबाहुमूलेषु लग्नं
स्तनकलशनितम्बाडम्बरेषूत्क्रमत् ।
जघननिविडमेतस्याः शून्यं स्नानवस्त्रं
पिशुनयति तनुयष्टिचङ्गिमानं तारुण्यञ्च ॥

योग्यमिति काकुः। या विश्वोत्कर्षतनौ कनकमायिव यस्याः तादृशी, तस्याः हारः शोभते ? नैवेति काकुः। यस्याः चक्राकारे मण्डलाकारे रमणफलके जघनपरिसरे कोऽपि अनिर्वचनीयः, अतिमनोहर इति भावः, काञ्च्याडम्बरः रशनाकलापः, अस्तीति शेषः, तस्याः पुनरपि अन्यदित्यर्थः, भूषणं दूषणञ्च दूषणमेवेत्यर्थः, भणामः कथयामः, काञ्च्यैवास्त्रैव तथा जितमिति भावः। यद्वा—तस्या हृष्टेः योग्यम् अनुरूपम्। तथा तस्याः हारः शोभते इति प्रश्नस्यार्थः। तथाच कञ्चुकहार-कालीकलापा एव तद्योग्यानि भूषणानि नान्यानि इति भावः ॥ २३ ॥

त्रिवलीति।—त्रिवलीभिः तिसृभिः रेखाभिः वलिता वलयिता आकुञ्चिता या नाभी च बाहुमूले च तेषु लग्नं संसक्तं स्तनौ कलशौ नितम्बाडम्बरश्च नितम्बाभोगश्च तेषु उत्क्रमत् उत्प्लवत्, कुचपर्यन्तमिति यावत्, जघननिविडं जघनार्द्रं, जघनावधीति यावत्, एतस्याः बालायाः शून्यं शिथिलं, विशदमित्यर्थः, स्नानवस्त्रं तनुयष्टेः कृशलतायाः चङ्गिमानं सौन्दर्यं लावण्यं वा तारुण्यञ्च यौवनञ्च पिशुनयति सूचयति ॥ २४ ॥

विदूषकः। [सक्रोधमिव]। भो! मए सव्वालंकारमहिदा वण्णिदा। तुमं उण जलविलुत्तप्पसाहणं ज्जेव्व सुमरसि, ता किं ण सुदं देवेण? (ग)।—

णिसग्गचंगस्स वि माणुसस्स
सोहा समुम्मीलदि भूसणेहिं।
मणीणं जच्चाणं वि कंचणेहिं
विहूसणे सज्जदि कावि लच्छी ॥*॥२५॥

राजा। मुद्धाणं णाम हिअआइं हरंति हंत!
णेवच्छकप्पणगुणेण णिदंबिणीओ।
छेआ उणो पकिदिचंगिमभाविणिज्जा
दक्खारसो ण महुरिज्जइ सक्कराए ॥†॥२६॥

* भोः! मया सर्वालङ्कारमहिता वर्णिता। त्वं पुनर्जलविलुप्तप्रसाधनामेव स्मरसि, तत् किं न श्रुतं देवेन?—
निसर्गचङ्गस्यापि मानुषस्य शोभा समुन्मीलति भूषणैः।
मणीनां जात्यानामपि काञ्चनैर्विभूषणे सज्जति कापि लक्ष्मीः॥

† मुग्धानां नाम हृदयानि हरन्ति हन्त!
नेपथ्यकल्पनगुणेन नितम्बिन्यः।
छेकाः पुनः प्रकृतिचङ्गिमभावनीया
द्राक्षारसो न मधुरीयति शर्करया॥

(ग) सर्वैः अलङ्कारैः महिता शोभिता। जलेति।—जलेन स्नानीयेनेति यावत्, विलुप्तम् अपमुक्तं प्रसाधनं यस्याः तथोक्ताम्।

निसर्गतः स्वभावतः चङ्गस्यापि सुन्दरस्यापि मानुषस्य शोभा भूषणैः समुन्मीलति समुद्भासते। जात्यानां सुजातानामपि मणीनां रत्नानां काञ्चनैः विभूषणे अलङ्करणे सति कापि अनिर्वचनीया लक्ष्मीः सज्जति संलगति, समुद्भासते इत्यर्थः॥ २५॥

हन्त! खेदे नितम्बिन्यः प्रशस्तनितम्बाः कान्ताः नेपथ्यस्य सुपरिच्छदस्य कल्पन-गुणेन रचनागुणेन मुग्धानां मूढानाम्, अविदग्धानामित्यर्थः, "मुग्धः सुन्दरमूढयोः" इति कोषः; हृदयानि हरन्ति मोहयन्ति, पुनः किन्तु छेकाः विदग्धाः, "छेको

विचक्षणा। जधा देवेणादिट्ठं—

थोआणं थणआण कसणकलिआलिंगीणं अच्छीणं वा
भूचंदस्स मुहस्स कंतिसरिआसोत्तस्स गत्तस्स अ।
को णेवच्छकलाहिं कीरदि गुणा ? जं तं वि सव्वं प्पिअं
संजुत्तं सुणु तत्थ कारणमिणं रूढ़ीअ का खडणा ? ॥ * ॥२७॥

राजा। [ विदूषकमुद्दिश्य ]। सुप्पांजल कविंजल! एस सिक्खाविआमि। (त)—

* यथा देवेनादिष्टम्—
स्थूलानां स्तनानां कर्णकलिकालिङ्गितयोर्वाक्ष्णोर्वा
भूचन्द्रस्य मुखस्य कान्तिसरित्स्रोतसो गात्रस्य च।
को नेपथ्यकलाभिः क्रियते गुणो ? यदपि सर्वं प्रियं
संयुक्तं शृणु तत्र कारणमिदं रूढः का खण्डना ? ॥

† सुपाञ्जल कपिञ्जल ! एष शिक्षयामि—

"विदग्धः" इति दर्पणः, प्रकृत्या स्वभावेन यः चङ्गिमा सौन्दर्यं तेन माननीया वन्दनीयाः। तथापि टङ्कारेण अकरणीया तस्याः योगेनेति भावः, न मधुरीयति न माधुर्यं प्राप्नोति, अतः मधुर एव स इति भावः ॥ २६ ॥

स्थूलानामिति।—स्थूलानां पीनानां स्तनानां, कर्णकलिकालिङ्गितयोः श्रवणकोरकान्तगामिनोः, आकर्णकृष्टयोरिति भावः, अक्ष्णोर्नयनयोर्वा, भुवः पृथिव्याः चन्द्रस्य आह्लादनस्येति भावः, मुखस्य, कान्तिसरित्स्रोतसः कान्तिप्रवाहं वहत इति भावः, गात्रस्य अङ्गस्य च, नेपथ्यकलाभिः वेशरचनाभिः को गुणः अलङ्कारः क्रियते ? न केनापीति शेषः, न कोऽपि गुणो भवतीति भावः। तत्र गुणाभावे हेतुः, इदं कारणं शृणु यत् यदपि सर्वं प्रियं शोभनमलङ्कारजातमिति भावः, संयुक्तं मिलितं, तदङ्गेष्विति भावः, तत् तदा रूढः प्रसिद्धः का खण्डना ? निरसनम् ? स्वाभाविकमपहरतीति यथा रूढेर्निरपायिता नास्ति, तथा तादृशसौन्दर्यशालिनी भूषणानपेक्षैवेति भावः ॥ २७ ॥

(त) सुपाञ्जल ! कपिञ्जल ! शिक्षयिष्ये उपदेक्ष्यसे, विचक्षणयेति शेषः। परिहासोक्तिरियम्।

किं कज्जं कइनिमेण विरअणविहिणा ? सो णडीणं विडंबो
तं चंगं जं णिअंगं जणमणहरणं तेण सीमंतिणीओ ।
जस्सिं सव्वांगसंगो सअलगुणगणो सो अदंभो अलंभो
तस्सिं णेच्छंति काले परमसुहअरे किं पि णेवच्छलच्छिं ॥†॥२८॥

विदूषकः । देव ! एदं विस्सरीअदि—ण केवलं देवीए णिओएण तिस्सा अणुगदम्हि, तारामेत्तीए वि सहित्तणं पत्ता कप्पूरमंजरीए । तेण तक्कज्जलज्जा अहं उणो वि ओलग्गिअ अविअ णिवेदइस्सं । ‡ (थ)—

किं कार्यं कृत्रिमेण विरचनविधिना ? स नटीनां विडम्बः
तच्चङ्गं यन्निजाङ्गं जनमनोहरणं तेन सीमन्तिन्यः ।
यस्मिन् सर्वाङ्गसङ्गः सकलगुणगणः सोऽदम्भोऽलम्भः
तस्मिन्नेच्छन्ति काले परमसुखकरे कामपि नेपथ्यलक्ष्मीम् ॥

‡ देव ! एतद्विस्मर्यते—न केवलं देव्या नियोगेन तस्या अनुगताऽस्मि, तारामैत्र्याऽपि सखीत्वं प्राप्ता कर्पूरमञ्जर्याः । तेन तत्कार्यलज्जाऽहं पुनरपि सेवकीभूय निवेदयिष्यामि ।—

किं कार्यमिति ।—कृत्रिमेण विरचनविधिना अलङ्करणविधानेन किं कार्यम् ? न किमपीत्यर्थः, स कृत्रिमविरचनविधिः नटीनां वेश्यानां विडम्बः प्रतारणं, लोकान् प्रतारयितुं वेश्याः कृत्रिमविरचनाभिः स्वाङ्गं सज्जयन्तीति भावः । यत् निजाङ्गं जनानां मनोहरणं तत् चङ्गं सुन्दरं, तेन चङ्गेन सीमन्तिन्यः उत्तमाङ्गनाः, भवन्तीति शेषः, यस्मिन् सकलगुणानां शीलसौन्दर्यादीनां गणः, सर्वैः अङ्गैः सज्जति सङ्गच्छते इति सर्वाङ्गसङ्गः, भवतीति शेषः, सः अदम्भः अकृत्रिमः, अलम्भः अप्राप्यः, तस्मिन् सर्वाङ्गसुन्दरे काले इति भावः, परमसुखकरे काले यौवने इति भावः, यौवनातिक्रमे तादृशश्रिया अपगमात् नेपथ्यापेक्षेति सूच्यते, कामपि नेपथ्यलक्ष्मीं वेशभूषाजनितश्रियं न इच्छन्ति, विदग्धा इति शेषः ॥ २८ ॥

(थ) नियोगेन आदेशेन । तस्याः कर्पूरमञ्जर्याः । तारामैत्र्या तारा अक्ष्णः कनीनिका तस्याः मैत्री प्रीतिः तया, उभयोः अन्योऽन्यदर्शने स्वाभाविकी या प्रीतिः सैव तारामैत्री इति उच्यते, तयाऽपि ।

[विचिन्त्य] ता अदिणिउणा वि कुविदा देवी। पाइआ जोण्हमज्जारिआ दुद्धं त्ति तक्कं। † (थ)

राजा। को अण्णो तुम्हाहिंतो मह कज्जसज्जो? को अण्णो चंदाहिंतो समुद्दवड्ढणणिट्ठो? *। (द)

[इति परिक्रम्य कदलीगृहप्रवेशं नाटयतः]

विदूषकः। इअं उत्तुंगफटिअमणिवेदिआ, ता इह उववसदु पिअवअस्सो। †

[राजा तथा करोति]।

विदूषकः। [उन्नमय्य]। भो! दीसदु पुण्णिमाचंदो। ‡

राजा। [विलोक्य]। अए! दोलारूढ़ाए मह वल्लहाए वअणं पुण्णिमाचंदो त्ति णिद्दिससि। [समन्तादवलोक्य]।—

एतावत् आश्चर्यम्। तदतिनिपुणाऽपि कुपिता देवी। पायिता ज्योत्स्नामार्जारिका दुग्धमिति तक्रम्।

* कोऽन्यो युष्मत्तो मम कार्य्यसज्जः? कोऽन्यश्चन्द्रतः समुद्रवर्द्धननिष्ठः?।

† इयमुत्तुङ्गस्फटिकमणिवेदिका, तदिहोपविशतु प्रियवयस्यः।

‡ भोः! दृश्यतां पूर्णिमाचन्द्रः।

§ अयि! दोलारूढ़ाया मम वल्लभाया वदनं पूर्णिमाचन्द्र इति निर्दिशसि।

(थ) हिन्दोलनयत्यर्थो दोलान्दोलयत्यर्थः। मरकतकुञ्जशब्देन मरकतकुञ्जो नाम प्रासादविशेषः। "मरकतपुञ्ज" इति पाठान्तरम्। हिन्दोलन्ती दोलायमाना। अतिनिपुणाऽपि अतिचतुराऽपि। कुपिता विप्रलब्धा, अस्माभिरिति शेषः। ज्योत्स्नामार्जारिका चन्द्रा बिडाली। दुग्धमिति ज्ञापयित्वेति भावः। तक्रं "घोल" इति प्रसिद्धम्।

(द) युष्मत्तः अन्ययोगे पञ्चमी, युष्मद्भिन्न इत्यर्थः। कार्य्यसज्जः कार्य्येषु तत्परः। चन्द्रतः चन्द्रात्। समुद्रेति।—समुद्रस्य वर्द्धने वृद्धिसम्पादने निष्ठा आवेशः यस्य तथोक्तः।

अवि अ—

रणंतमणिणेउरं झणझणंतहारच्छडं

कलक्कणिदकिंकिणीमुहरमेहलाडंबरं ।

विलोलवलआवलीजणिदमंजुसिंजारवं

ण कस्स मणमोहणं ससिमुहीअ हिंदोलणं ? ॥ * ॥३२॥

विदूषकः। भो! सुत्तआरो तुमं। अहं उण वित्तिआरो भविअ वित्थरेण वण्णेमि। (घ)—

* अपि च—

रणन्मणिनूपुरं झणझणायमानहारच्छटं

कलक्वणितकिङ्किणीमुखरमेखलाडम्बरम् ।

विलोलवलयावलीजनितमञ्जुशिञ्जारवं

न कस्य मनोमोहनं शशिमुख्या हिन्दोलनम् ? ॥

† भोः ! सूत्रकारस्त्वम् । अहं पुनर्वृत्तिकारो भूत्वा विस्तरेण वर्णयामि ।—

वेगेन गच्छत् यत सुरतरुण्याः देवाङ्गनायाः विमानं तदनुरूपं यथा तथा वहन्तो चलन्तो, प्राकारं लङ्घयन्तो अतिक्रामन्तो, तथा रथ्यमान वेगहताः उद्गमन्तो ऊर्द्ध्वं गच्छन्तो, नमन्तो अधोभवन्तो, कर्णोत्कर्षैः आकर्षणेन त्यागेन चेति यावत्, आयान्तो आगच्छन्तो, समीपमिति भावः, यान्तो गच्छन्तो, दूरमिति भावः, दोला जनानां मनोहरणं करोति ॥ ३१ ॥

रणन्तः ध्वनन्तः मणिनूपुरौ यत्र तथोक्तं, झणझणायमाना हारच्छटा हारावली यस्मिन् तथाविधं, कलं मधुरं क्वणितं यासां तथाभूताः याः किङ्किण्यः क्षुद्रघण्टिकाः ताभिः मुखरः सशब्दः मेखलायाः रसनायाः आडम्बरः विस्तारः यस्मिन् तादृशं, विलोलाभिः चपलाभिर्वलयावलीभिः जनितः मञ्जुः मनोज्ञः शिञ्जारवः यस्मिन् तथाविधं, शशिमुख्याः चन्द्रवदनायाः हिन्दोलनं कस्य जनस्य न मनोमोहनम् ? मनोहरणम् ? अपितु सर्वस्यैव जनस्य मनो मोहयति इत्यर्थः ॥ ३२ ॥

(घ) सूत्रं करोतीति सूत्रकारः । "स्वल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥" इत्युक्तलक्षणसूत्रप्रणेतेत्यर्थः । वृत्तिकारः भाष्यकारः, सूत्रस्य स्वल्पाक्षरत्वेन अर्थगौरवात् सर्वेषामसम्यक् बोधः स्यादिति तत्परिष्काराय स्पष्टतरव्याख्यामकरोदिति भावः ।

इत्तिएदाइं विब्भमुज्जलाइं दोलाप्पवञ्चिआइं ।

कस्स ण लिहेइ चित्ते णिउणो कंदप्पचित्तअरो ? ॥ * ॥४०॥

राजा । [सविषादम्] । कधमवदिण्णा कप्पूरमंजरी !! रित्ता दोला, रित्तं अ मह चित्तं, रित्ताइं दंसणुस्सुआइं मह णअणाइं । †

विदूषकः । ता विज्जुलेहा विअ खणदिट्ठणट्ठा । ‡

राजा । मा एव्वं भण, हरिचंदपुरी विअ दिट्ठा पणट्ठा अ । § (न) [ स्मृतिनाटितकेन ] ।—

मांजिट्ठी अट्ठमुद्दा णववडणमुब्भसज्जला अंगजट्ठी

दिट्ठी वाणिंदुलेहाधवलमजइणी कुंतला कज्जलाहा ।

---

* इत्येतानि विभ्रमोज्ज्वलानि दोलाप्रवर्त्तितानि ।

कस्य न लिखति चित्ते निपुणः कन्दर्पचित्रकरः ? ॥

† कथमवतीर्णा कर्पूरमञ्जरी !! रिक्ता दोला, रिक्तं च मम चित्तं, रिक्ते दर्शनोत्सुके मम नयने ।

‡ तद्विद्युल्लेखेव क्षणदृष्टनष्टा ।

§ मैवं भण, हरिश्चन्द्रपुरीव दृष्टा प्रनष्टा च ।

---

इत्येतानीति ।—निपुणः दक्षः कन्दर्प एव चित्रकरः आलेख्यकरः इत्येतानि एवंरूपाणि विभ्रमेण उज्ज्वलानि रमणीयानि दोलाप्रवर्त्तितानि दोलान्दोलनविलसितानि कस्य जनस्य चित्ते मनसि न लिखति ? न चित्रयति ? सर्वस्यैव चित्ते लिखति इत्यर्थः । केचित्तु विभ्रमोज्ज्वलानीति विभ्रमाः विलासास्त एव उज्ज्वलाः शृङ्गाराः येषु तानि, "शृङ्गारः शुचिरुज्ज्वलः" इत्यमरः ; इत्याहुः ॥ ४० ॥

(न) हरिश्चन्द्रपुरीति ।—हरिश्चन्द्रस्य नगरी पूर्वं सततोत्सवमयत्वेन लोकानां दर्शनानन्दिनी आसीत्, पश्चात् विश्वामित्रकोपतो यथा प्रनष्टा तथा तादृगुत्सवमयत्वेन नैवानन्दिनी सा दृष्टा, क्षणेनैव प्रनष्टा अदर्शनं गतेत्यर्थः । विद्युल्लेखाया यद्यपि क्षणस्थायित्वं क्षणेनैव प्रणाशश्च, तथाऽपि तद्दर्शनं न लोकानन्दकत्वं, चक्षुःप्रतिघातित्वादिति तस्याप्यसदृशत्वमिति भावः ।

इत्थं वग्गाणं रेहा विहरइ हरिणीचंचलच्छी अ एसा
कंदप्पो दीहदप्पो जुअजणजअणे पुस्सलक्खो व्व भादि ॥*॥४१॥

विदूषक:। एदं तं मरगअकुंजं। इह उवविसिअ पिअवअस्सो पडिवालेदु तं। संझा वि संणिहिदा वट्टदि। †

[ उभौ तथा कुरुत: ]।

राजा। अदिसिसिरं वि हिमाणिं संदावदाइणिं (प) अणुहवामि। ‡

विदूषक:। ता लच्छीमहुअरो खणं चिट्ठदु देवो, जाव अहं सिसिरोवआरसामग्गिं (फ) संपादेमि। [ इति नाट्येन निष्क्रम्य

* माञ्जिष्ठो चोलमुद्रा नवघटनसुवर्णोज्ज्वला:ङ्गयष्टि:
दृष्टिर्बालेन्दुरेखाधवलिमजयिनी कुन्तला: कज्जलाभा:।
इत्थं वर्णाना रेखा विहरति हरिणीचञ्चलाक्षी चैषा
कन्दर्पो दीर्घदर्पो युवजनजये पूर्णलक्ष्य इव भाति ॥

† एतन्मरकतकुञ्जम्। इहोपविश्य प्रियवयस्य: प्रतिपालयतु ताम्। सन्ध्याऽपि सन्निहिता वर्तते।

‡ अतिशिशिरामपि हिमानीं सन्तापदायिनीमनुभवामि।

माञ्जिष्ठीति।—चोलमुद्रा चोलावयव: माञ्जिष्ठो मञ्जिष्ठारागरक्तेति यावत्, अङ्गयष्टि: नवं घटनं निर्माणं यस्य तादृशं यत् सुवर्णं काञ्चनं तद्वत् उज्ज्वला, दृष्टि: बालाया: वामनयाया: इन्दुरेखाया: चन्द्रकलाया: धवलिमानं शुभ्रत्वं जयतीति तथोक्ता, कुन्तला: केशा: कज्जलाभा: कज्जलनिभा:, गाढनीला इत्यर्थ:, इत्थम् एवंरूपा, आनन्दनीयेति भाव:, वर्णानां रूपाणां रेखा। साधु विहरति विलसति, एतस्या इति शेष:, एषा च हरिणीवत् चञ्चले चपले अक्षिणी नयने यस्या: तथोक्ता, विहरतीत्यनेनान्वय:; अत: दीर्घ: महान् दर्पो यस्य तथाभूत: कन्दर्प: काम: युवजनानां जये पूर्णलक्ष्य इव पूर्ण: लक्ष्य: अभिलाष इति यावत् यस्य तथाभूत इव भाति राजते, कन्दर्पस्त्रिभुवनविजयी भविष्यतीति मन्ये इति भाव:। "दीर्घदर्शी" इति पाठे—दीर्घं दृश्यतीति तदेवार्थ: ॥ ४१ ॥

(प) हिमानी हिमसंहति: ताम्। सन्तापदायिनीं, विरहादिति भाव:।

पुरोऽवलोक्य च ] । किं उण एसा विअक्खणा इदो णिअडे आअच्छदि ? । *

राजा । संणिहिदो संकेअआलो कहिदो मंतीहिं पि ।

[ श्रुत्वा मदनाकुलमभिनीय ] । (ख)—

कमलअकरचरणा वि क्खु कुवलअणअणा मिअंकवअणा वि ।
अहह ! णवचंपअंगी तह वि हु तावेइ अच्चरिअं ॥ † ॥ ४२ ॥

विदूषकः । [ अग्रतोऽवलोक्य ] । भो ! विअक्खणा सिसिरोवआरसामग्गीमंडिदहत्था आअदा । ‡

[ ततः प्रविशति शिशिरोपचारसामग्रीमण्डिता विचक्षणा ] ।

विचक्षणा । [ परिक्रम्य ] । अहो ! पिअसहीए महंतो क्खु विरहदाहज्जरो । §

* तल्लक्ष्मीभर्तृकः स्वयं तिष्ठतु देवः, यावदहं शिशिरोपचारसामग्रीं सम्पादयामि । किं पुनरेषा विचक्षणा इतो निकटे आगच्छति ? ।

† सन्निहितः सङ्केतकालः कथितो मन्त्रिभिरपि ।—

कमलमयकरचरणाऽपि खलु कुवलयनयना मृगाङ्कवदनाऽपि ।
अहह ! नवचम्पकाङ्गी तथाऽपि तापयत्याश्चर्यम् ॥

‡ भोः ! विचक्षणा शिशिरोपचारसामग्रीमण्डितहस्ता आगता ।

§ अहो ! प्रियसख्या महान् खलु विरहदाहज्वरः ।

(फ) तल्लच्छीति ।—तत तर्हि लक्ष्मीः राजलक्ष्मीरिति भावः, तल्लक्षणवक्षः तस्या वक्षाय इत्यर्थः, केवलं राजश्रिया युक्त इति यावत् । शिशिरोपचारसामग्रीं शीतलपदार्थाद्युपचारं, सन्तापनिवर्तकद्रव्यसमूहमिति भावः ।

(ख) मदनाकुलमभिनीय आत्मावस्थां नाट्येन प्रकटय्य ।

कमलमयीति ।—कमलमयाविव नवपद्माविव करचरणौ यस्याः तथोक्ताऽपि, कुवलये इव नीलोत्पले इव नयने यस्याः तथाविधा खलु तथाविधाऽपि, मृगाङ्कश्चन्द्रः तद्वत् वदनं यस्याः तथाविधाऽपि, तथा नवानि चम्पकानीव अङ्गानि यस्याः तथोक्ताऽपि, अहह ! खेदे तापयति, इति शेषः, आश्चर्यम् ; सन्तापनिवर्तकगुणसद्भावेऽपि सन्तापाभिव्यक्तिरिति विशेषोक्तिः, सन्तापहेतुं विनाऽपि सन्तापोत्पत्तिरिति विभावनेत्यनयोः सन्देहसङ्करः, तदुक्तं दर्पणे—"सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा" इति, "विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते" इति च ॥ ४२ ॥

विदूषकः। (उपसृत्य) भोदि! किं एदं?।

विचक्षणा। सिसिरोवआरसामग्गी। †

विदूषकः। कस्स किदे?। ‡

विचक्षणा। प्पिअसहीए किदे। §

विदूषकः। ता मज्झ वि अद्धं देहि। ¶

विचक्षणा। किं णिमित्तं?। **

विदूषकः। महाराअस्स किदे। ††

विचक्षणा। किं उण कारणं तस्स?। ‡‡

विदूषकः। कप्पूरमंजरीए वि किं?। §§

विचक्षणा। किं ण जाणासि महाराअस्स दंसणं?। ¶¶

विदूषकः। तुमं वि किं ण जाणासि महाराअस्स कप्पूर-मंजरीए दंसणं?। ***

(इत्युभौ चलतः)।

विचक्षणा। ता कहिं महाराओ?। †††

---

* भवति! किमेतत्?।

† शिशिरोपचारसामग्री।

‡ कस्य कृते?।

§ प्रियसख्याः कृते।

¶ तन्ममापि अर्द्धं देहि।

** किं निमित्तम्?।

†† महाराजस्य कृते।

‡‡ किं पुनः कारणं तस्य?।

§§ कर्पूरमञ्जर्यां अपि किम्?।

¶¶ किं न जानासि महाराजस्य दर्शनम्?।

*** त्वमपि किं न जानासि महाराजस्य कर्पूरमञ्जर्या दर्शनम्?।

††† तत् कुत्र महाराजः?।

विदूषकः। तुह वअणेण मरगअकुंजे (भ) चिट्ठदि।

विचक्खणा। ता महाराएण सह मरगअकुंजदुआरे चिट्ठ खणं, जेण उहअदंसणे जादे सिसिरोवआरसामग्गीए जलंजली दिज्जदि। † (म)

विदूषकः। [सामर्षमिव]। तहिं गच्छ जहिं णागच्छसि। (य) [इति निष्पतति। पुनरागत्य] ता कीस दुआरदेसे होदव्वं? ‡। (र)

विचक्खणा। देवीए आदेसेण कप्पूरमंजरी समाअच्छदि। §

विदूषकः। को तीए आदेसो?। ¶

विचक्खणा। तहिं देवीए बालतरुणो तिस्सा आरोविदा। **

विदूषकः। को को?। ††

* तव वचनेन मरकतकुञ्जे तिष्ठति।

† तन्महाराजेन सह मरकतकुञ्जद्वारे तिष्ठ क्षणं, येनोभयदर्शने जाते शिशिरोपचारसामग्र्या जलाञ्जलिर्दीयते।

‡ तत्र गच्छ यत्र नागच्छसि। तत् किं द्वारदेशे भवितव्यम्?।

§ देव्या आदेशेन कर्पूरमञ्जरी समागच्छति।

¶ कः तस्या आदेशः?।

** तत्र देव्या बालतरवस्तस्या आरोपिताः।

†† के के?।

(भ) मरकतकुञ्जे मरकतमणिनिर्मितवेदिकाविशिष्टे कुञ्जे लतामण्डपे इत्यर्थः।

(म) उभयोः कर्पूरमञ्जरी-राज्ञोः अन्योऽन्यदर्शने इत्यर्थः। शिशिरोपचारसामग्र्या शीतलद्रव्यसम्भारेण। जलाञ्जलिः दीयते परित्यज्यते, त्याज्यामिति शेषः।

(य) सा विचक्षणाम् अपहस्य आक्रोश्य। तत्र गच्छ यत्र नागच्छसि, यत्र इति शेषः, म्रियस्वेति भावः। तत्रास्माभिरिन्दुकरमण्डलं वाच्य इति प्रतीत्या कोपात् तथा कथितमिति भावः।

(र) भवितव्यं स्थातव्यं, मयेति शेषः।

[ ततः प्रविशति विशेषभूषिताङ्गी कर्पूरमञ्जरी ]।

कर्पूरमञ्जरी। कहिं उण विअक्खणा ?। *

विचक्षणा। [ तामुपसृत्य ]। सहि ! करीअदु देवीए समादिट्ठं। †

राजा। वअस्स ! किं उण तं ?। ‡

विदूषकः। तमालविडवांतरिदो जाहि। §

[ राजा तथा करोति ]।

विचक्षणा। एस कुरबअतरू। ¶

[ कर्पूरमञ्जरी तमालिङ्गति ]।

राजा। णवकुरबअत्थवओ कुंभथोरत्थणीए

रहसविरइदेण णिब्भरालिंगणेण।

तह कुसुमसमिद्धिं लंभिदो मंदरीए

जह भमरकुलाणं तत्थ जत्ता पउत्ता ॥ **॥ ४४ ॥

विदूषकः। भो ! पेक्ख पेक्ख महिंदजालं ( व ), जेण—

---

* क्व पुनर्विचक्षणा ?।

† सखि ! क्रियतां देव्या समादिष्टम्।

‡ वयस्य ! किं पुनस्तत् ?।

§ तमालविटपान्तरितो भवेति।

¶ एष कुरबकतरुः।

** नवकुरबकस्तबकः कुम्भस्थूलस्तन्या

रभसविरचितेन निर्भरालिङ्गनेन।

तथा कुसुमसमृद्धिं लम्भितः सुन्दर्या

यथा भ्रमरकुलानां तत्र यात्रा प्रवृत्ता ॥

†† भोः ! प्रेक्षस्व प्रेक्षस्व महेन्द्रजालं, येन—

नवकुरबकस्तबकः कुम्भाविव स्थूलौ पीनौ घनौ यस्याः तथोक्ता तस्याः सुन्दर्याः रभसविरचितेन सहसा कृतेन निर्भरालिङ्गनेन गाढाश्लेषेण तथा कुसुमानां समृद्धिं सम्पदं लम्भितः प्रापितः, यथा भ्रमरकुलानां भृङ्गावलीनां तत्र कुसुमसमृद्धौ यात्रा गतिः सहसा प्रवृत्ता ॥ ४४ ॥

(व) महेन्द्रजालं महत् इन्द्रजालं चमत्कारविधायिनी कापटिकी विद्या तत्।

बालोवि कुरवअतरू तरुणीए गाढमुवगूढो ।
सहसत्ति पुप्फणिअरं मअणसरं विअ समुग्गिरइ ॥ †† ॥ ४५ ॥

राजा । इदिसो ज्जेव्व दोहदअस्स प्पभावो ।

विचक्षणा । अअं एसो तिलअद्दुमो । †

[ कर्पूरमञ्जरी चिरं तिर्य्यगवलोकयति ] ।

राजा ।—

तिक्खाणं तरलाणं कज्जलकलासंवग्गिदाणं पि से
पासे पंचसरं सिलीमुहधरं णिच्चं कुणंताणं अ ।
णेत्ताणं तिलअद्दुमे णिवडिदा धाडी मिअच्छीअ जं
तं सो मंजरिपुंजदंतुरसिरो रोमांचिदो व्व ट्ठिदो ॥ ‡ ॥ ४६ ॥

बालोऽपि कुरवकतरुस्तरुण्या गाढमुपगूढः ।
सहसेति पुष्पनिकरं मदनशरमिव समुद्गिरति ॥

* ईदृश एव दोहदस्य प्रभावः ।

† अयमेव तिलकद्रुमः ।

‡ तीक्ष्णयोस्तरलयोः कज्जलकलासंवलितयोरप्यस्याः
पार्श्वे पञ्चशरं शिलीमुखधरं नित्यं कुर्वतोश्च ।
नेत्रयोस्तिलकद्रुमे निपतिता धाटी मृगाक्ष्या यत्
तत् स मञ्जरीपुञ्जदन्तुरशिरा रोमाञ्चित इव स्थितः ॥

बाल इति ।—बालोऽपि शिशुरपि कुरवकतरुः तरुण्या युवत्या अनया गाढम् उपगूढः आलिङ्गितः सन् सहसेति सहसैव, इति-शब्दोऽप्येवार्थः, पुष्पाणां निकरं समूहं मदनशरमिव समुद्गिरति समुद्वमति ॥ ४५ ॥

तीक्ष्णयोरिति ।—तीक्ष्णयोः दीर्घप्रान्तयोः तरलयोश्चञ्चलयोः अपि, तथा कज्जलकलया अञ्जनरेखया संवलितयोः अलङ्कृतयोरिति भावः, अत एव नित्यं सततं शिलीमुखधरं शरधरं पञ्चशरं कामं कुर्वतोश्च अस्याः मृगाक्ष्याः नेत्रयोः धाटी दर्शनव्यापारविशेष, यत् यतः पार्श्वे पार्श्वस्थिते तिलकद्रुमे निपतिता, तत् तस्मात् स तिलकद्रुमः मञ्जरीणां पुञ्जैः समूहैः दन्तुराणि उन्नतदन्तानीव शिरांसि अग्राणि यस्य तथाभूतः, अत एव रोमाञ्चित इव सञ्जातरोमाञ्च इव स्थितः इति ॥ ४६ ॥

विचक्षणा। एसो असोअसाही।

[कर्पूरमञ्जरी चरणताडनं नाटयति]।

राजा। असोअतरुताडणं रणिदणेउरेणंघिणा

किदं अ मिअलंछणच्छविमुहीअ हेलोल्लसं।

सिहासु सअलासु वि त्थवअमंडणाडंबरं

ठिदं अ गअणंगणं जणणिरिक्खणिज्जं करणं ॥†॥ ४०॥

विदूषकः। भो वअस्स! जं सअं ण किदं दोहदअदाणं देवीए, जाणेसि एत्थ किं कारणं?। ‡

राजा। तुमं जाणेसि?। §

विदूषकः। भणामि, जइ देवो ण कुप्पदि। ¶

राजा। को एत्थ रोसावसरो?। भण उम्मुहिआए जीहाए। **

* एष अशोकशाखी।

† अशोकतरुताडनं रणितनूपुरेणाङ्घ्रिणा

कृतञ्च मृगलाञ्छनच्छविमुख्या हेलोल्लासम्।

शिखासु सकलास्वपि स्तवकमण्डनाडम्बरं

स्थितञ्च गगनाङ्गनं जननिरीक्षणीयं करणम्॥

‡ भो वयस्य! यत् स्वयं न कृतं दोहददानं देव्या, जानासि तत्र किं कारणम्?।

§ त्वं जानासि?।

¶ भणामि, यदि देवो न कुप्यति।

** कोऽत्र रोषावसरः? भण उन्मुखितया जिह्वया।

मृगलाञ्छनश्चन्द्रः तस्येव छविः कान्तिर्यस्य तथाभूतं मुखं यस्याः तथोक्ता, तया, रणितः नूपुरो यत्र तादृशेन च अङ्घ्रिणा चरणेन हेलोल्लासं सविलासमित्यर्थः यथा तथा, अशोकतरोः ताडनम् आघातः कृतञ्च, सकलासु अपि शिखासु स्तवकमण्डनेन स्तवकविन्यासेन आडम्बरः समुल्लासः यस्य तथाभूतं गगनाङ्गनं गगनाजिरं [illegible], जनानां निरीक्षणीयं दर्शनीयं यत् स्थितञ्च। [illegible] ॥ ४० ॥

विदूषकः।—

इह जइ वि कामिणीणं सुंदेरं धरइ णवअवआणं सिरी।
अहिदेवदे व्व णिवसइ तह वि क्खु तारुस्सए लच्छी॥ * ॥४८॥

राजा। सुणिदो दे अहिप्पाओ। किं उण किं वि भणामो—
बालाअ होंति कोदूहलेण एअमेअ चवलचित्ताओ।
दरलसिदथणीसु पुणो णिवसइ मअरद्धअरहस्सं॥ † ॥४९॥

विदूषकः। तरुणो वि रूअरेहारहस्सेण फुल्लंति, ण उण रइरहस्सं जाणंति। ‡ (अ)

[ नेपथ्ये ]।

वैतालिकः। सुहसंझा भोदु देवस्स—

---

* इह यद्यपि कामिनीनां सौन्दर्यं धारयत्यवयवानां श्रीः।
अधिदेवतेव निवसति तथाऽपि खलु तारुण्ये लक्ष्मीः॥

† श्रुतस्तेऽभिप्रायः। किं पुनः किमपि भणामः—
बाला भवन्ति कौतूहलेनैवमेवं चपलचित्ताः।
दरलसितस्तनीषु पुनर्निवसति मकरध्वजरहस्यम्॥

‡ तरवोऽपि रूपरेखारहस्येन विकसन्ति, न पुनः रतिरहस्यं जानन्ति।

§ सुखसन्ध्या भवतु देवस्य—

---

इह संसारे यद्यपि कामिनीनाम् अवयवानाम् अङ्गानां श्रीः सौन्दर्यं धारयति, यौवनापगमेऽपीति शेषः, तथाऽपि तारुण्ये यौवने लक्ष्मीः श्रीः अधिदेवतेव अधिष्ठात्री देवीव निवसति तिष्ठति। देवी गतयौवना, इयन्तु प्राप्तयौवनेति भावः॥ ४८॥

बालाः नवयुवत्यः कौतूहलेन यौवनफलं कथमास्वादयामिति औत्सुक्येन एवम् एवं चपलचित्ताः तरलहृदयाः, अधीरा इति भावः, भवन्ति। पुनः किन्तु दरम् अल्पं ललितौ लास्यन्तौ, स्तनावित्यर्थः, स्तनौ यासां तथाविधासु, प्रगल्भास्विति भावः, मकरध्वजस्य रहस्यं गूढाभिप्रायं, रतिकौशलमिति यावत्, निवसति॥ ४९॥

(अ) तरवः वृक्षा अपि, किं वक्तव्यं मानवा इति भावः, रूपस्य सौन्दर्यस्य रेखा कैश्चिद्, तस्या रहस्येन गूढाभिप्रायेणैव, विकसन्ति समुन्मीलन्ति।

कोआणं लोअणेहिं सह कमलवणं अद्धणिद्दं कुणंतो
मुंचंतो तिक्खभावं सह अ सरभसं माणिणीमाणसेहिं ।
मंजिट्ठारत्तसुत्तच्छविकिरणचओ चक्कवाएक्कमित्तो
जादो अत्थाचलत्थो सपदि दिणमणी पक्कणारंगपिंगो ॥ § ॥५०॥

राजा । भो वअस्स ! संणिहिदो संझासमओ वट्टदि । *

विदूषकः । संकेअकालो कहिदो वंदीहिं । †

कर्पूरमञ्जरी । सहि विअक्खणे ! गमिस्सं दाव, विआलो संवुत्तो वट्टदि । ‡

विचक्षणा । एव्वं करीअदु । §

[ इति परिक्रम्य निष्क्रान्ताः सर्वे ]।

इति द्वितीयजवनिकान्तरम् ।

कोकानां लोचनैः सह कमलवनमर्द्धनिद्रं कुर्वन्
मुञ्चंस्तीक्ष्णभावं सह च सरभसं मानिनीमानसैः ।
माञ्जिष्ठारक्तसूत्रच्छविकिरणचयश्चक्रवाकैकमित्रं
जातोऽस्ताचलस्थः सपदि दिनमणिः पक्वनारङ्गपिङ्गः ॥

* भो वयस्य ! सन्निहितः सन्ध्यासमयो वर्त्तते ।

† सङ्केतकालः कथितो वन्दिभिः ।

‡ सखि विचक्षणे ! गमिष्यामि तावत् । विकालः संवृत्तो वर्त्तते ।

§ एवं क्रियताम् ।

मञ्जिष्ठया रागद्रव्यविशेषेण रक्तं यत् सूत्रं तद्वत् छविः प्रभा यस्य तथाविधः, किरणचयः मयूखनिवहः यस्य तथोक्तः, चक्रवाकानाम् एकं मुख्यं मित्रं सुहृत्, "एके मुख्यान्यकेवलाः" इत्यमरः; मित्रं चक्रवाकाणामन्योऽन्यविरहहारित्वादिति भावः, पक्वं परिणतं यत् नारङ्गं फलविशेषः तद्वत् पिङ्गः पीतरक्त इत्यर्थः, दिनमणिः सूर्यः कोकानां लोचनैः नेत्रैः सह कमलवनम् अर्द्धा निद्रा यस्य तथोक्तं निमीलितप्राय-मिति यावत्, कुर्वन्, मानिनीनां मानसैः सह सरभसं सवेगं, प्रबलमित्यर्थः, तीक्ष्णभावं मुञ्चन् त्यजन्, सन्ध्यायां यथा मानिन्यः कान्ताः प्रियेषु तीक्ष्णभावं कामवशात्त्यजन्ति तथा निजम् उत्तापं परिहरतीति यावत्, सपदि अस्ताचलार्थी अस्ताचलं जिगमिषु-रित्यर्थः जातः ॥ ५० ॥

# अथ तृतीयजवनिकान्तरम् ।

[ ततः प्रविशति राजा विदूषकश्च ] ।

राजा । [ तामनुसन्धाय ] ।—

दूरे किज्जदु चंपअस्स कलिआ कज्जं हलिद्दाअ किं ?
उत्तत्तेण अ कंचणेण गणणा का णाम जच्चेण वि ।
लावण्णस्स णवुग्गदिंदुमहुरच्छाअस्स तिस्सा पुरो
पच्चग्गेहिं वि केसरस्स कुसुमक्केरेहिं किं कारणं ? ॥ १ ॥

अवि अ—

मरगअमणिगुत्था हारजट्ठि व्व तारा
भमरकवलिअद्धा मालईमालिए व्व ।
रहसवलिअकंठी तीअ दिट्ठी वरिट्ठा
सवणपहणिविट्ठा माणसं मे पविट्ठा ॥*॥२ ॥

दूरे क्रियतां चम्पकस्य कलिका कार्यं हरिद्रायाः किम् ?
उत्तप्तेन च काञ्चनेन गणना का नाम जात्येनापि ? ।
लावण्यस्य नवोद्गतेन्दुमधुरच्छायस्य तस्याः पुरः
प्रत्यग्रैरपि केसरस्य कुसुमोत्करैः किं कारणम् ? ॥

अपि च—

मरकतमणिगुम्फा हारयष्टिरिव तारा
भ्रमरकवलितार्धा मालतीमालिकेव ।

चम्पकस्य कलिका दूरे क्रियतां दूरीक्रियतां, हरिद्रायाः कार्यं किम् ? न किमपीत्यर्थः । नवोद्गतस्य नवोदितस्य इन्दोश्चन्द्रस्येव मधुरा मनोहारिणी छाया कान्तिर्यस्य तथाविधस्य, तस्याः कर्पूरमञ्जर्याः लावण्यस्य "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तलक्षणस्य पुरः अग्रतः जात्येनापि सुजातेनापि, विशुद्धेनापीत्यर्थः, उत्तप्तेन ज्वलता काञ्चनेन का नाम गणना ? विचारः ? न कोऽपि इत्यर्थः । प्रत्यग्रैरपि नवैरपि केसरस्य बकुलस्य कुसुमोत्करैः पुष्पसमूहैः किं कारणम् ? फलम् ? न किमपीत्यर्थः । चम्पककलिका हरिद्रा तप्तकाञ्चनं केसरकुसुमञ्च तल्लावण्येन नोपमीयते इति भावः ॥ १ ॥

विदूषकः । भो वअस्स ! किं तुमं भज्जाजिदो विअ किंपि किंपि कुरुकुराअंतो चिट्ठसि ?। * (क)

राजा । वअस्स ! सिविणअं दिट्ठमणुसंधेमि । † (ख)

विदूषकः । ता कहेदु पिअवअस्सो । ‡

राजा ।—

जाणे पंकरुहाणणा सिविणए मं केलिसज्जागदं
कंदोट्टेण तडित्ति ताडिदुमणा हत्थंतरे संट्ठिदा ।
ता कोडेण मए वि झत्ति धरिदा ठिल्लं वरिल्लंचले
तं मोत्तूण गदं अ तीअ सहसा णट्ठा अ णिद्दा वि मे ॥§॥ ३॥

रभसवलितकण्ठो तस्या दृष्टिधारा
श्रवणपथनिविष्टा मानसं मे प्रविष्टा ॥

* भो वयस्य ! किं त्वं भार्याजित इव किमपि किमपि कुरुकुरायमाणस्तिष्ठसि ?।

\+ वयस्य ! स्वप्नं दृष्टमनुसन्दधामि ।

‡ तत् कथयतु प्रियवयस्यः ।

§ जाने पङ्करुहानना स्वप्ने मां केलिशय्यागतम्
इन्दीवरेण झटिति ताडितुमना हस्तान्तरे संस्थिता ।
तत् कौतूहलेन मयाऽपि झटिति धृता शिथिलं वस्त्राञ्चले
तन्मोचयित्वा गतं तया च सहसा नष्टा च निद्राऽपि मे ॥

तस्याः रभसेन वेगेन हर्षेण वा वलितः आकृष्टः कण्ठः कण्ठावलतप्रगल्भमिति भावः यया तथोक्ता, दर्शनमात्रेणैव प्रशंसनीयेति भावः, धवला उत्कृष्टा दृष्टिः शरत्तमालिका श्यामलेन हरिणाक्षिका जुष्टा युक्ता तारा मध्ये तारकदृष्टिरिव, भ्रमरेण कवलितं यत्तम् यस्याः तथाभूता मालतीमालिकेव, श्रवणपथनिविष्टा स्वस्य कर्णपथं प्रविष्टा, आकर्णकृष्टेत्यर्थः, मे मम मानसं प्रविष्टा । सततमेव मनसा तद्दर्शनं पश्यामीति भावः ॥ २ ॥

(क) भार्याजित इव भार्यावशंवद इव, स्त्रैण इवेत्यर्थः ।

(ख) अनुसन्दधामि अनुसरामीत्यर्थः ।

जाने इति ।—जाने जानामीत्यर्थः, पङ्करुहानना पङ्कजमुखी सा स्वप्ने केलिशय्या-गतं क्रीडातल्पशायिनं माम् इन्दीवरेण नीलोत्पलेन, नयनेनेति भावः, ताडितुमनाः

विदूषकः। [स्वगतम्]। भोदु एव्वं दाव। [प्रकाशम्]। भो वअस्स! अज्ज मए वि सिविणं दिट्ठं। *

राजा। [सप्रत्याशम्]। ता कहिज्जदु कीरिसं तं सिविणअं?। †

विदूषकः। अज्ज जाणे, सिविणए सुरसरिआसोत्ते सुत्तोम्हि, ता हरसिरसोवरि दिण्णलोलाचलणाए गंगाए पक्खालिदोम्हि तोएण। ‡ (ग)

राजा। तदो तदो?। §

विदूषकः। तदो सरअसमअवरिसिणा जलहरेण जहिच्छं पीदोम्हि। ¶ (घ)

राजा। अच्छरिअं!! अच्छरिअं!! तदो तदो?। **

विदूषकः। तदो मत्तिणक्खत्तगदे भअवदि मत्तंडे (ङ) तम्मअस्सो-

* भवतु एवं तावत्। भो वयस्य! अद्य मयाऽपि स्वप्नो दृष्टः।

† तत् कथ्यतां कीदृशः स स्वप्नः?।

‡ अद्य जाने, स्वप्ने सुरसरित्स्रोतसि सुप्तोऽस्मि; तद्धरशिरस उपरि दत्तलीला-चरणया गङ्गायाः प्रक्षालितोऽस्मि तोयेन।

§ ततस्ततः?।

¶ ततः शरत्समयवर्षिणा जलधरेण यथेच्छं पीतोऽस्मि।

** आश्चर्यमाश्चर्यम्!! ततस्ततः?।

मकुन्दामेत्यर्थः, झटिति सहसैवेत्यर्थः, हस्तान्तरं मंस्विता सांप्रतमा, तत् तदा मयाऽपि कौतूहलेन झटिति वस्त्राञ्चलं वदनप्रान्ते शिथिलं यथा तथा धृता, तथा तत् मम चारचनित्यर्थः, मोचयित्वा सहसा गतं प्रस्थितं, मे मम निद्राऽपि नष्टा च। अहयं समकालत्वद्योतनार्थम्॥ २॥

(ग) सुरसरितः गङ्गायाः स्रोतसि प्रवाहे। तत् तदा हरस्य शिरस उपरि दत्तः निहितः लीलया चरणो यया तथाभूतायाः।

(घ) पीतोऽस्मि सिक्तोऽस्मि।

(ङ) मार्तण्डे सूर्ये।

णईसंगदं समुद्दं गदो महामेहो ; जाणे, अहं वि मेहगब्भट्ठिदो गच्छेमि । ††

राजा । तदो तदो ? । *

विदूषकः । तदो सो तहिं थूलजलविंदूहिं वरिसिदुं पउत्तो । अहं अ रअणाअरसुत्तीहिं मुत्ताणामहेआहिं संपुडं समुग्घाडिअ जलविंदूहिं समं पीदोम्हि ; ताणं अ दसमासप्पमाणं मोत्ताहलं भविअ गब्भे ट्ठिदो । † (च)

राजा । तदो तदो ? । ‡

विदूषकः ।—

तदो चउस्सट्ठिसु सुत्तिसु ट्ठिदो
घणंबुविंदूजिदवंसरोअणो ।
सुवत्तुलं णिम्मलमच्छमुज्जलं
कमेण पत्तो णवमुत्तिअत्तणं ॥ § ॥४॥

†† ततः स्वातीनक्षत्रगते भगवति मार्तण्डे ताम्रपर्णीनदीसङ्गतं समुद्रं गतो महामेघः ; जाने, अहमपि मेघगर्भस्थितो गच्छामि ।

* ततस्ततः ? ।

† ततोऽसौ तत्र स्थूलजलबिन्दुभिर्वर्षितुं प्रवृत्तः, अहञ्च रत्नाकरशुक्तिभिर्मुक्तानामधेयाभिः सम्पुटं समुद्घाट्य जलबिन्दुभिः समं पीतोऽस्मि, तासाञ्च दशमासप्रमाणं मुक्ताफलं भूत्वा गर्भे स्थितः ।

‡ ततस्ततः ? ।

§ ततश्चतुःषष्टिषु शुक्तिषु स्थितो घनाम्बुबिन्दुजितवंशरोचनः ।
सुवर्तुलं निर्मलमच्छमुज्ज्वलं क्रमेण प्राप्तो नवमौक्तिकत्वम् ॥

(च) असौ महामेघः । रत्नाकरशुक्तिभिः रत्नाकरः समुद्रः तत्र स्थिताः शुक्तयः मुक्तास्फोटाः ताभिः । सम्पुटम् आवरणम् । समुद्घाट्य निर्भिद्य । तासां शुक्तीनाम् । दशमासप्रमाणं दश माषा इव "दशार्द्धगुञ्जं प्रवदन्ति माषम्" इति लीलावत्युक्तं प्रमाणं परिमाणं यस्य तथाभूतं पञ्चाशद्गुञ्जामितमिति यावत्, अतिप्रकाण्डमिति भावः ।

जित इति ।—जितं न्यक्कृतं वंशरोचनं तदाख्यं वस्तु येन तथाभूतः ॥ ४ ॥

राजा। तदो तदो ?। *

विदूषकः। तदो सोहमत्ताणं ताणं सुत्तीणं गब्भगअं मुत्ताहलत्तणेण मस्सेमि। †

राजा। तदो तदो ?। ‡

विदूषकः। तदो परिणदे (क) काले समुद्दाहिंतो कड्ढिदाओ ताओ सुत्तीओ फाड़िदाओ अ। अहं चउस्सट्ठिमुत्ताहलत्तणं गदो ट्ठिदो। किणिदो अ एक्केण सेट्ठिणा सुवस्सलक्खं देइअ। §

राजा। अहो ! विचित्तदा सिविणअस्स। तदो तदो ? ¶

विदूषकः। तदो तेण आणिअ वेधआरएहिं वेधाविआइं मोत्तिआइं। मम वि ईसीसि वेअणा समुप्पस्सा। ** (ज)

राजा। तदो तदो ?। ††

विदूषकः। तदो—

तेणावि मुत्ताहलमंडलेण एक्केक्कदाए दसमासिएण।
एक्कावली गंठिक्कमेण गुत्था जा संठिदा कोटिसुवस्समुल्ला ॥‡‡॥५॥

* ततस्ततः ?।

† ततः सोऽहमात्मानं तासां शुक्तीनां गर्भगतं मुक्ताफलत्वेन मन्ये।

‡ ततस्ततः ?।

§ ततः परिणते काले समुद्रात् कर्षितास्ताः शुक्तयः विदारिताश्च। अहं चतुःषष्टिमुक्ताफलत्वं गतः स्थितः। क्रीतश्चैकेन श्रेष्ठिना सुवर्णलक्षं दत्त्वा।

¶ अहो ! विचित्रता स्वप्नस्य। ततस्ततः ?।

** ततस्तेनानीय वेधकारैर्वेधितानि मौक्तिकानि। ममापीषद्वेदना समुत्पन्ना।

†† ततस्ततः ?।

‡‡ ततः,—

तेनापि मुक्ताफलमण्डलेनैकैकतया दशमासिकेन।
एकावली ग्रन्थिक्रमेण गुम्फिता या संस्थिता कोटिसुवर्णमूल्या ॥

(क) परिणते विगते काले, नियत्कालानन्तरमित्यर्थः।

(ज) तेन श्रेष्ठिना। वेधितानि छिद्रितानि।

राजा। तदो तदो ?। *

विदूषकः। तदो तं करंडिआइ कदुअ (क) साअरदत्तो णाम वाणिओ गदो पंचालाधिवस्स सिरिवज्जाउहस्स णअरं कण्णउज्जं णाम; तहिं च सा विक्कीणीदा कोडिए सुवण्णस्स। †

राजा। तदो तदो !। ‡

विदूषकः। तदो अ—

दट्ठूण थोरत्थणतुंगिमाणं एक्कावलीए तह चंगिमाणं।
सा तेण दिण्णा दइदाइ कंठे रज्जंति छेआ समसंगमम्मि ॥ ६ ॥

अवि अ—

णहवहलिदजोण्हाणिब्भरे रत्तिमज्झे
कुसुमसरपहारत्तासमसंभोलिदाणं।

* ततस्ततः ?।

† ततस्तां करण्डिकायां कृत्वा सागरदत्तो नाम वणिक् गतः पाञ्चालाधिपस्य श्रीवज्रायुधस्य नगरं कान्यकुब्जं नाम; तत्र च सा विक्रीता कोट्या सुवर्णस्य।

‡ ततस्ततः ?।

§ ततश्च—

दृष्ट्वा स्थूलस्तनतुङ्गिमानमेकावल्यास्तथा चङ्गिमानम्।
सा तेन दत्ता दयितायाः कण्ठे रज्यन्ति छेकाः समसङ्गमे ॥

अपि च—

नभोबहलितज्योत्स्नानिर्भरे रात्रिमध्ये
कुसुमशरप्रहारत्रासमसंमीलितयोः।

एकैकतया प्रत्येकशः दशमाषिकेण दशमाषमितेन। एकावली एकसरो हारः, तस्या ग्रन्थिकमेव ग्रन्थनानुसारेण ॥ ५ ॥

(क) तां एकावलीं, करण्डिकायां तदाख्यपात्रविशेषे कृत्वा निधाय।

दृष्ट्वेति।—तेन पाञ्चालाधिपेन वज्रायुधेन स्थूलयोः स्तनयोः, दयिताया इति भावः, तुङ्गिमानं तुङ्गत्वं, पीनत्वमित्यर्थः, तथा एकावल्याः चङ्गिमानं सौन्दर्यं दृष्ट्वा सा एकावली दयितायाः कण्ठे दत्ता। छेका विदग्धाः समसङ्गमे तुल्यसमागमे रज्यन्ति प्रीतिमनुभवन्ति। कण्ठनिधानात् एकावलीस्तनसङ्गमो भविष्यतीति भावः ॥६॥

णिहुवणपरिरंभे णिब्भरुत्तुंगपीण-
त्थणकलसणिवेसा पीड़िदोहं विबुद्धो ॥ § ॥७॥

राजा। [ किंचिद्विहस्य विचिन्त्य च ]।—

सिविणअमिमं असच्चं तं दिट्ठं मेणुसंधमाणस्स ।
पड़िसिविणएण तस्स वि णिवारणं तुह अहिप्पाओ ॥*॥८॥

विदूषकः। भट्टो ठक्कुरो, कबुहाकिलंतो बम्हणो, अविणीद-हिअआ बालरंडा, विरहिदो अ माणुसो मणोरहमोदएहिं अत्ताणं विड़ंबेदि। अवि अ वअस्स! पुच्छेमि, कस्स उण एसो प्पहाओ?। † (ञ)

निधुवनपरिरम्भे निर्भरोत्तुङ्गपीन-
स्तनकलशनिवेशात्पीडितोऽहं विबुद्धः ॥
स्वप्नमिममसत्यं तत दृष्टं ममानुसन्धयतः।
प्रतिस्वप्नेन तस्यापि निवारणं तवाभिप्रायः ॥

† भ्रष्टो राजा, क्षुधाक्रान्तो ब्राह्मणः, अविनीतहृदया बालरण्डा, विरहितश्च मानुषो मनोरथमोदकैरात्मानं विडम्बयति। अपि च वयस्य! पृच्छामि, कस्य पुनरेष प्रभावः?।

नभसि आकाशे बहलितः प्रसृतः ज्योत्स्नानां चन्द्रिकाणां निर्भरः अतिशयः यस्मिन् तथाभूते, रात्रिमध्ये कुसुमशरस्य कामस्य प्रहारात् त्रासेन भयेन सम्मिलितयोः चकितयोः, तयोः राजदम्पत्योरिति शेषः, निधुवनं सुरतं तस्मिन् यः परिरम्भः आलिङ्गनं तस्मिन्, निर्भरोत्तुङ्गयोः नितरामुन्नतयोः पीनयोः स्थूलयोः स्तनकलशयोः निवेशात् सम्पातात् पीडितः अहं विबुद्धः जागरितः ॥ ७ ॥

स्वप्नमिति।—तत तर्हि इममसत्यम् अलीकं दृष्टं स्वप्नम् अनुसन्धयतः अनुस्मरतः मम प्रतिस्वप्नेन, त्वदीयेनेति शेषः, तस्यापि अनुस्मरणस्यापि निवारणम् अपहरणमिति यावत्, तव अभिप्रायः आशयः ॥ ८ ॥

(ञ) भ्रष्टः उन्मत्त इति भावः। ब्राह्मणः बटुरिति भावः। क्षुधया क्रान्तः आर्त्तः। अविनीतहृदया प्रेमासक्तचित्तेति भावः, बालरण्डा बालिका धूर्ता च।

राजा। प्पेमस्स। *

विदूषकः। भो ! देवीगदे प्पणअप्पकढ़े वि प्पेमे किं त्ति कप्पूरमंजरीं सव्वंगवित्थारिदलोअणो पिअंतो विअ अवलोएसि ? किं तदो वि परिहीअमाणगुणा देवी ? । † (ट)

राजा। मा एव्वं भण—

कदा वि संघडइ कस्स वि प्पेमगंठी
एवमेव तत्थ ण हु कारणमत्थि रूअं।
चंगत्तणं उण भज्जदि जं तहिं पि
ता दिज्जए पिसुणलोअमुहेसु मुद्दा ॥ ‡ ॥ ८ ॥

* प्रेमणः ।

† भोः ! देवीगते प्रणयप्रकृष्टेऽपि प्रेमणि किमिति कर्पूरमञ्जरीं सर्वाङ्गविस्तारितलोचनः पिबन्निव अवलोकयसि ? किं ततोऽपि परिहीयमाणगुणा देवी ? ।

‡ मैवं भण—

कदाऽपि सङ्घटते कस्यापि प्रेमग्रन्थिः
एवमेव तत्र न खलु कारणमस्ति रूपम् ।
चङ्गत्वं पुनर्भज्यते तत्रापि
तद्दीयते पिशुनलोकमुखेषु मुद्रा ॥

विरहितः विरहातुर इत्यर्थः, मानुषः नरः, मनोरथमोदकैः सङ्कल्परूपैर्मिष्टद्रव्यैः आत्मानं विडम्बयति प्रतारयति ।

(ट) देवीगते देवीनिष्ठे, प्रणयेन स्नेहेन प्रकृष्टः प्रकृष्टः तस्मिन्, प्रेमणि विद्यमानायाम् । ततोऽपि कर्पूरमञ्जर्या अपि, अपेक्षार्थे पञ्चमी ; परिहीयमाणाः गुणा यस्याः तथाभूता । "परिहीणप्पमाणगुणा" इति पाठे—परिहीणं प्रमाणं येषां तथाभूता गुणा यस्याः तथोक्ता ।

कदाऽपि कस्मिन्नपि काले कस्यापि प्रेमग्रन्थिः प्रेमबन्धः एवमेव सङ्घटते, कस्मिन्नपीति शेषः, तत्र रूपं सौन्दर्यं न खलु नैव कारणम् अस्ति, तथाच भवभूतिः,—
"व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते । विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥"
इति उत्तररामचरिते षष्ठाङ्के १२ श्लोकः ; तत्रापि प्रभुः चाङ्गत्वेऽप्युत्कर्षेऽपि

विदूषकः। भो ! किं उण एदं पेम्म पेम्म त्ति भणंति ?।

राजा। अण्णोण्णमिलिदस्स मिहुणस्स मअरद्धअसासणे पअट्टं अण्णअग्घं पेमेत्ति छइल्ला भणंति। + (ठ)

विदूषकः। कीदिसो सो ?। ‡

राजा। जस्सिं विअप्पघडणाइकलंकमुक्को
अन्ताणअस्स सरलत्तणमेइ भावो।
एक्केक्कअस्स पसरंतरसप्पवाहो
सिंगारवड्ढिअमणोभवदिण्णसारो ॥ § ॥ १० ॥

---

भोः ! किं पुनरेतत् प्रेम प्रेमेति भणन्ति ?।

+ अन्योऽन्यमिलितस्य मिथुनस्य मकरध्वजशासने प्रवृद्धं अनर्घ्यं प्रेमेति विदग्धा भणन्ति।

‡ कीदृशः सः ?।

§ यस्मिन् विकल्पघटनादिकलङ्कमुक्तः आत्मनः सरलत्वमेति भावः।
एकैकस्य प्रसरद्रसप्रवाहः शृङ्गारवर्द्धितमनोभवदत्तसारः ॥

---

यत् पुनः चङ्गत्वं सौन्दर्य्य "चङ्गस्तु शोभने दक्षे" इत्यमरः मृग्यते प्रार्थ्यते, तत् सौन्दर्य्य-मार्गणं पिशुनानां खलानां लोकानां मुखेषु मुद्रा आवरणं दीयते। पिशुनाः यस्मिन् कस्मिन्नपि प्रेमबन्धनं गार्हितं मा भवत्वामिति तत् सौन्दर्य्यमान्विष्यते, सुन्दर्य्यामासक्तिं दीयायेति पिशुनमुखबन्धनाय मया तत्सौन्दर्य्यादिगुणाः कीर्त्यन्ते इति भावः ॥ ९ ॥

(ठ) अन्योऽन्य परस्पर मिलितस्य सङ्गतस्य मिथुनस्य स्त्रीपुंयुगलस्य मकरध्वजस्य कामस्य शासने आज्ञायां, तदाज्ञापालने, प्रवृद्धं सञ्जातं अनर्घ्यं भावबन्धं, प्रेम इति छइल्ला विदग्धाः, विद्वांस इत्यर्थः, "छेकाश्च विदग्धेषु" इति अवमादौ रभसः, भणन्ति कथयन्ति।

यस्मिन् प्रेमणि सति एकैकस्य उभयस्येत्यर्थः, आत्मनः स्वस्य भावः आशयः, "भावोऽभिप्राय आशयः" इत्यमरः; विकल्पानां संशयानां घटनादयः सम्मेलनादयः ये कलङ्काः दोषाः तैः मुक्तः विरहितः प्रसरन् प्रवहन् रसप्रवाहः आनन्दस्रोतः यस्मिन् तथाभूतः, तथा शृङ्गारेण सुरतेन वर्द्धितः वृद्धिं नीतः यः मनोभवः कामः तेन दत्तः अर्पितः सारः उत्कर्षः यस्य तथाविधः सन्, सरलत्वम् आर्जवम् एति गच्छति, समदुःखसुखत्वं प्राप्नोतीत्यर्थः, स एव प्रेमेति निष्कर्षः ॥ १० ॥

विदूषक:। कधं विअ सो लक्खीअदि ?।*

राजा। जाणं सहावप्पसरंतसुल्लोलदिट्ठी-
पेरंतलुंठिअमणाणं परप्परेण।
वड्ढंतमम्महविदीसरसप्पसारा
ताणं पआसइ लहुं विअ चित्तभावो ॥ ११ ॥

अवि अ—
अंतो णिविट्ठमअणविब्भमडंबरं जं
तं भण्णए अ मअणमंडणमेत्थ पेम्मं।
दुल्लक्खअं पि जं पअडेइ जणो जअम्मि
तं जाणिमो अ सुबहुत्तं मअणिंदजालं ॥ † ॥ १२ ॥

* कथमिव स लक्ष्यते ?।

† ययो: स्वभावप्रसरत्सुलोलदृष्टिपर्यन्तलुण्ठितमनसो: परस्परेण।
वर्द्धमानमन्मथवितीर्णरसप्रसारयो: प्रकाशते लघुरिव चित्तभाव: ॥

अपि च—
अन्तर्निविष्टमदनविभ्रमडम्बरं यत्
तत् भण्यते च मदनमण्डनमत्र प्रेम।
दुर्लक्ष्यमपि यत् प्रकटयति जनो जगति
तज्जानीमश्च सुबहुलं मदनेन्द्रजालम् ॥

ययो: परस्परेण अन्योऽन्येन स्वभावत: प्रसरन्त्य: प्रचलन्त्य: सुलोला: सुचञ्चला या दृष्टय: तासां पर्यन्तेषु अपाङ्गावलोकनेष्विति भाव:, लुण्ठितं पतितं, पर्यस्तमित्यर्थ:, मनो ययो: तथाभूतयो:, अपाङ्गावलोकनतत्परयोरिति भाव:, वर्द्धमानेन वृद्धिं गच्छता मन्मथेन कामेन वितीर्ण: दत्त:, जनित इति यावत्, रसप्रसर: स्नेहातिरेक:, दृश्यते इति शेष:, तयोरन्ययो: चित्तभाव: मनसोऽभिप्राय: लघुरिव द्रुत इव प्रकाशते प्रकटतां गच्छति ॥ ११ ॥

यत् अन्तर्निविष्टस्य हृदयं गतस्य मदनस्य विभ्रमडम्बरं विलासातिशय्यं, प्रियजनवशीकरणहेतुभूतम् इति भाव:, तत् अत्र संसारे मदनमण्डनं कामभूषणं प्रेम भण्यते कथ्यते। जगति जन: दुर्लक्ष्यमपि लक्षयितुमशक्यमपि यत् प्रकटयति प्रकाशयति तत् सुबहुलं सुमहत् मदनस्य इन्द्रजालं विस्मयकरीं लोकमतातिशयीं कपटविद्यां जानीमश्च मन्यामहे ॥१२॥

विदूषकः। जइ चित्तगदं प्पेममणुराअमुप्पादेदि, ता किं कीअदि मंडणाडंबरविडंबणाए ?। * (ड)

राजा। वअस्स! सच्चमिणं—

किं मेहलावलअणेउरसेहरेहिं ?
किं चंगिमाअ ? किमु मंडणडंबरेहिं ?।
तं अण्णमत्थि इह किंपि णिअंबिणीओ
जेणं लहंति सुहअत्तणमंजरीओ ॥ † ॥ १२ ॥

अवि अ—

किं गेअणिट्टविहिणा ? किमु वारुणीए ?
धूवेण किं अगुरुणा ? किमु कुंकुमेण ?।

* यदि चित्तगतं प्रेम अनुरागमुत्पादयति, तत् किं क्रियते मण्डनाडम्बरविडम्बनया ?।

† वयस्य ! सत्यमिदम्—

किं मेखलावलयनूपुरशेखरैः ?
किं चङ्गिमत्वेन ? किमु मण्डनाडम्बरैः ?।
तदन्यदस्तीह किमपि नितम्बिन्यो
येन लभन्ते सुभगत्वमञ्जरीः ॥

अपि च—

किं गेयनृत्यविधिना ? किमु वारुण्या ?
धूपेन किम अगुरुणा ? किमु कुङ्कुमेन ?।

(ड) यदि चित्तगतं हृदयनिष्ठं प्रेम अनुरागम् आसक्तिम् उत्पादयति जनयति, तत् तदा मण्डनानाम् अलङ्काराणाम् आडम्बरे विस्तारे आयोजने वा विडम्बना प्रयासः तया किं क्रियते ? किं फलं साध्यते ? न किमपीत्यर्थः।

मेखलावलयनूपुरशेखरैः काञ्चीवलयमञ्जीरशिरोभूषणैः किम् ? न किमपि फलमित्यर्थः, चङ्गिमत्वेन सौन्दर्यवत्त्वेन किम ? न किमपीत्यर्थः, मण्डनाडम्बरैः अन्यैश्च अलङ्करणप्रयासैः किम ? नैव किमपि कार्यमित्यर्थः, येन नितम्बिन्यः कामिन्यः सुभगत्वमञ्जरीः सौभाग्यकलाः लभन्ते प्राप्नुवन्ति, इह संसारे तत् अन्यत् किमपि अस्ति, तत्तु तारामैत्रं अनुराग एवेति भावः ॥ १२ ॥

मिट्ठत्तणे महिदलम्मि ण किं वि अण्णं
रूवीअ अत्थि सरिसं उण माणुसस्स ? ॥ १४ ॥

अवि अ—

जा चक्कवट्टिघरिणी जणगेहिणी वा
पेम्मम्मि ताण ण तिलं वि विसेसलाभो ।
जाणे पिओअ जइ किज्जदि को वि भावो
माणिक्कभूसणणिअसणकुंकुमेहिं ॥ १५ ॥

अवि अ—

किं लोअणेहिं तरलेहिं ? किमाणणेण
चंदोवमेण ? थणएहिं किमुण्णएहिं ? ।

मधुरत्वे महीतले न किमप्यन्यत्
रूपेऽस्ति सदृशं पुनर्मानुषस्य ॥

अपि च—

या चक्रवर्तिगृहिणी जनगेहिनी वा
प्रेम्णि तयोर्न तिलमात्रमपि विशेषलाभः ।
जाने प्रियया यदि क्रियते कोऽपि भावो
माणिक्यभूषणनिवसनकुङ्कुमैः ॥

अपि च—

किं लोचनैस्तरलैः ? किमाननेन
चन्द्रोपमेन ? स्तनैः किमुन्नतैः ? ।

गेयं गानं नृत्यं नर्तनं तयोर्विधिः अनुष्ठानं तेन किम् ? वारुण्या सुरया किम् ? अगुरुणा धूपेन किम् ? कुङ्कुमेन किम् ? न एतैः किमपि फलमित्यर्थः । महीतले पृथिव्यां मानुषस्य पुनः किन्तु रूपेः प्रणयः सदृशं किमपि, नास्तीति शेषः, मधुरत्वे न अस्ति ॥१४॥

या चक्रवर्तिनः सम्राजः गृहिणी महिषी, या जनगेहिनी सामान्यजनकान्ता वा, तयोः प्रेम्णि तिलमात्रमपि अणुरूपोऽप्यर्थः, विशेषलाभः प्रभेदज्ञानं न, अस्तीति शेषः । यदि प्रियया सौन्दर्यशोभया कोऽपि भावः प्रणयः क्रियते, तदा माणिक्य-भूषणेन निवसनेन सुवसनेन कुङ्कुमेन च, स भवतीति शेषः, इति जाने मन्ये ॥ १५ ॥

तं किं पि अत्थि इह भूवलए णिमित्तं
जेणांगणाग्र हिअआउ ण ओसरंति ॥ † ॥ १६ ॥

विदूषकः। एव्वं णेदं, किं उण अस्सं पि मे कधेसु, जं कुमारत्तणे माणुसस्स अमणोज्जमेतस्सिं वि तरुणत्तणे चंगत्तणं वड्ढदि। * (ढ)

राजा। णूणं दुवे इह पजावइणो जअम्मि
जे देहणिम्मवणजोव्वणदाणदक्खा।
एक्को घडेदि पढमं कुमरीणमंगं
उक्कोविऊण पअडेइ उणो दुदीओ ॥ १७ ॥

तत्किमप्यस्तीह भूवलये निमित्तं
येनाङ्गना हृदयान्नापसरन्ति ॥

* एवमेतत्, किं पुनरन्यदपि मे कथय, यत् कुमारत्वे मानुषस्यामनोज्ञम्, एतस्मिन्नपि तारुण्ये चङ्गत्वं वर्द्धते।

† नूनं द्वाविह प्रजापती जगति
यौ देहनिर्माणयौवनदानदक्षौ।
एको घटयति प्रथमं कुमारीणामङ्गम्
उत्कीर्य्य प्रकटयति पुनर्द्वितीयः ॥

तरलेक्षणाः लोचनैः किम्? चन्द्रोपमेन अमृतनिभेन आननेन मुखेन किम्? उन्नतैः उत्तुङ्गैः स्तनैः किम्? न किमपि एतैः प्रयोजनमस्तीत्यर्थः। इह भूवलये भूमण्डले तत् किमपि अन्यत् निमित्तं कारणम्, अस्तीति शेषः, येन निमित्तेन अङ्गनाः कामिन्यः हृदयात् न अपसरन्ति न चलन्ति, सततं हृदय एव तिष्ठन्तीति भावः ॥१६॥

(ढ) मानुषस्य कुमारत्वे अप्राप्तयौवनत्वे इत्यर्थः, यत् अमनोज्ञं न मनोहरमित्यर्थः, तारुण्ये यौवने चङ्गत्वं सौन्दर्य्यं, मनोहरत्वमिति यावत्, वर्द्धते वृद्धिं गच्छति।

इह जगति द्वौ प्रजापती विधातारौ, यौ देहनिर्माणे यौवनदाने च दक्षौ निपुणौ, तयोरेकः प्रथमं कुमारीणाम् अङ्गं घटयति निर्मिमीते, द्वितीयः पुनः उत्कीर्य्य उन्मार्ज्येति यावत् प्रकटयति प्रकाशयति। एतेन निर्माणविधेः उन्मीलनकारिणः कामस्य समधिकं नैपुण्यं भण्यते ॥१७॥

तेण अ—

रणिदवलअकंचीणेउराआसलच्छी
मरगदमणिमाला गोरिआ हारजट्ठी ।
हिअअहरणमंत्तं जोव्वणं कामिणीणं
जअदि मअणकंडं छट्ठअं बट्टअं अ ॥ १८ ॥

तहा अ—

अंगं लावण्णपुण्णं सवणपरिसरे लोअणा हारतारा
वच्छं थोरत्थणिल्लं तिवलिवलइदं मुट्ठिगेज्झं अ मज्झं ।
चक्काआरो णिदंबो तरुणिममए किं णु अण्णेण कज्जं ?
पंचेहिं ज्जेव्व बाला मअणजअमहावेजअंतीअ होंति ॥ १९ ॥

तेन च—

रणितवलयकाञ्चीनूपुरावासलक्ष्मी-
र्मरकतमणिमाला गौरिका हारयष्टिः ।
हृदयहरणमन्त्रं यौवनं कामिनीनां
जयति मदनकाण्डः षष्ठको वर्द्धकश्च ॥

तथा च—

अङ्गं लावण्यपूर्णं श्रवणपरिसरे लोचने हारतारे
वक्षः स्थूलस्तनं त्रिवलिवलयितं मुष्टिग्राह्यञ्च मध्यम् ।
चक्राकारो नितम्बस्तरुणिमसमये किं त्वन्येन कार्यम् ?
पञ्चभिरेव बाला मदनजयमहावैजयन्त्यो भवन्ति ॥

रणितानां वलयानां काञ्चीनां रशनानां नूपुराणाम् आवासेन धारणेनेति भावः, लक्ष्मीः श्रीः, मरकतमणीनां माला स्रक्, गौरिका काञ्चनी हारयष्टिः, तिस्रस्त्विति शेषः, षष्ठकः षष्ठां पूरयन्, वर्द्धकश्च प्रवृद्धतरश्च, मदनस्य काण्डः शरः, कामिनीनां हृदयहरणमन्त्रं यौवनं जयति सर्वोत्कर्षेण वर्त्तते। मदनस्य पञ्चसु शरेषु सत्स्वपि तेभ्यः प्रबलतरेण कामिनीनां यौवनरूपषष्ठशरेण जगत् पराजीयते इति भावः ॥१८॥

तरुणिमसमये यौवने लावण्येन पूर्णम् अङ्गं शरीरं, हारा मनोहारिणौ तारा ययोः तथाभूते श्रवणपरिसरे आकर्णमिष्टे इति यावत्, लोचने नेत्रे, स्थूलौ स्तनौ यत्र तथाविधं वक्षः, त्रिवलिभिः तिसृभिः रेखाभिः वलयितं वेष्टितं मुष्टिग्राह्यं मुष्टिमेयं च

[ नेपथ्ये ]

सहि कुरंगिए! इमिणा सिसिरोवआरेण णलिणिव्व बाढं किलिस्सामि (क)—

विसं व्व विसकंदलो विसहरो व्व हारच्छड़ा
वअस्समिव अप्पणो किरइ तालविंटाणिलो।
तहा अ करणिग्गदं ज्जलइ जंतधाराजलं
ण चंदणमहोसहं हरइ देहदाहं अ मे॥ *॥ २०॥

विदूषकः। सुदं प्पिअवअस्सेण? भरिआ कण्णा पीऊसगंडूसेहिं; ता किं अज्जवि उपेक्खीअदि घणघम्मेण किलिस्संती मुणालिआ? गाढकडुणदुस्सहेण सलिलेण सिंचिज्जंती केलिकुसुमत्थली? कम्मासिअमोत्तिआणं झड़त्ति फुड़ती एक्का-

---

सखि कुरङ्गिके! अनेन शिशिरोपचारेण नलिनीव बाढं क्लाम्यामि—

विषमिव बिसकन्दलो विषधर इव हारच्छटा
वयस्यमिवात्मनः किरति तालवृन्तानिलः।
तथा च करनिर्गतं ज्वलति यन्त्रधाराजलं
न चन्दनमहौषधं हरति देहदाहं च मे॥

† श्रुतं प्रियवयस्येन? भृतौ कर्णौ पीयूषगण्डूषैः; तत् किमद्यापि उपेक्ष्यते घनघर्मेण क्लाम्यन्ती मृणालिका? गाढक्वथनदुःसहेन सलिलेन सिच्यमाना केलिकुसुमस्थली? कल्माषितमौक्तिकानां झटिति स्फुटन्ती

---

मध्यं कटिदेशः, तथा चक्राकारः मण्डलाकारः, सुवर्णाभ इत्यर्थः, नितम्बः, एभिरेव पञ्चभिः बालाः कामिन्यः मदनस्य कामस्य कार्ये जगतां विजये महावैजयन्त्यः महत्यः पताकाः भवन्ति, अन्येन किं नु कार्यम? नैव किमपीत्यर्थः॥१९॥

(क) शिशिरोपचारेण शीतलप्रक्रियया, नलिनीदलसंस्तरादिनेति भावः, नीहारपातेन च।

बिसकन्दलो मृणाललता विषमिव गरलमिव, हारच्छटा हारावली विषधर इव भुजङ्ग इव, मे प्रतिभातीति शेषः। तालवृन्तानिलः आत्मनः स्वस्य वयस्यमिव अग्निमिवेत्यर्थः, किरति वर्षति, तथा करनिर्गतं युष्माकं करेभ्यः निःसृतं यन्त्रधारा-

वलिआ? गंठिवण्णकेदारिआ लुंठज्जन्ती गंधहरिणेण? ता सव्वं दे सिविणअं संपण्णं। एहि, पविसम्ह। उड्डिज्जदु मअरद्धअ-पडाआ। पअट्टदु कंठकुहरम्मि पंचमहुंकाराणं रिंछोली। थक्कंतु बाप्फप्पवाहा। मंथरिज्जंतु णीसासप्पसरा। लहदु लावण्णं उणो णवभावं। ता एहि, खिड्डक्किआदुआरेण पविसम्ह।‡(त)

[इति प्रविशत:]।

[तत: प्रविशति नायिका कुरङ्गिका च]।

नायिका। [सवाष्पमं ग्रगतम]। अम्मो! किं एसो सहसा गअणंगणादो अवदोण्णो पुण्णिमाहरिणंको? किं वा तुट्टेण

एकावलो? ग्रन्थिपर्ण-केदारिका लुण्ठ्यमाना गन्धहरिणेन? तत् सर्वं ते स्वप्नं सम्पन्नम्। एहि, प्रविशाव:। उत्थाप्यतां मकरध्वजपताका। प्रवर्ततां कण्ठकुहरे पञ्चमहुङ्काराणां रचना। कोकोक्रियन्तां वाष्पप्रवाहा:। मन्थरोक्रियन्तां नि:श्वास-प्रसरा:। लभतां लावण्यं पुनर्नवभावम। तदेहि, खिडकिकाद्वारेण प्रविशाव:।

‡ अहो! किमेष सहसा गगनाङ्गनादवतीर्ण: पूर्णिमाहरिणाङ्क:? किं वा

जलं ज्वलति तपतोत्यर्थ:. चन्दनमेव महौषधञ्च मे मम [illegible] न हरति न प्रमवतीत्यर्थं ॥२०॥

(त) भतौ पूरितौ पौयूषगण्डूषे: अमृतरसैरिति यावत। घनघर्मेण गाढ़-सन्तापेनेत्यर्थ:। गाढम् अतिमात्रं क्वथितम उत्तापितमित्यर्थ:, अत एव दु:सहं दुर्विषहं ओदुमअअं तेन। कोंअकुसुमअअलो कोकाकुसुमसूचि:। वाप्पाविकेति।—बद्धि: माधैर्निष्पन्नानि वाष्पाविकानि मौक्तिकानि मुक्ताफलानि तेषां, वाष्पाविकेत्यनेन सम्यक्‌विपुष्टता मौक्तिकानां ब्यज्यते। स्फुटन्ती विदलन्ती। ग्रन्थिपर्णानां गन्धद्रव्य-भेदानां केदारिका चेत्रम। लुण्ठ्यमाना क्रियमाणा, विपर्य्यस्यमानेति यावत्। गन्धहरिणेन कस्तूरीमृगेण। कण्ठकुहरे कण्ठविवरे। पञ्चमहुङ्काराणां कोकिल-कूजितानां रचना प्रबन्ध:। "पुष्पसाधारणे काले पिक: कूजति पञ्चमम्" इत्युक्ते:। उच्छ्वासितावा अश्रा: कोकिलवत्या: मधुरस्वर: प्रवर्त्तितां भाव:। कोकोक्रियन्तां स्निग्धोक्रियन्तामित्यर्थ:। बाष्पप्रवाहा: अश्रुस्रोतांसि, अश्रु इति शेष:। मन्थरो-क्रियन्तां मन्दोक्रियन्ताम्। पुनर्नवभावं नूतनत्वम्। खिडकिकाद्वारेण पार्श्वद्वारेण।

णीलकंठेण णिअदेहं लंभिदो मणोहवो ? किं वा हिअअस्स दुल्लहो णअणाणं सज्जणो जणो मं संभावेदि ? [प्रकाशम्]। सहि कुरंगिए ! इंदजालं विअ पेक्खामि। ‡ (थ)

विदूषकः। [राजानं हस्ते गृहीत्वा]। भोदि ! सच्चं इंदजालं संपण्णं। *

[नायिका लज्जते]।

कुरङ्गिका। सहि ! कप्पूरमंजरि ! अब्भुट्ठाणेण संभावेहि भट्टारअं। † (द)

[नायिका उत्थातुमिच्छति]।

राजा। [हस्तेन गृहीत्वा]।—

उट्ठिऊण थणभारभंगुरं मा मिअंकमुहि ! भंज मज्झअं।
तुज्झ ईरिसासणणिवेसदंसणे लोअणाणं मअणो पसीददु ॥ २१ ॥

शुद्धेन नीलकण्ठेन निजदेहं लम्भितो मनोभवः ? किं वा हृदयस्य दुर्लभो नयनानां सज्जनो जनो मां सम्भावयति ? सखि कुरङ्गिके ! इन्द्रजालमिव पश्यामि।

* भवति ! सत्यमिन्द्रजालं सम्पन्नम्।

† सखि कर्पूरमञ्जरि ! अभ्युत्थानेन सम्भावय भट्टारकम्।

‡ उत्थाय स्तनभारभङ्गुरं मा मृगाङ्कमुखि ! भञ्जय मध्यम्।
तवेदृशासननिवेशदर्शनाल्लोचनयोर्मदनः प्रसीदतु ॥

(थ) गगनाङ्गनात् अन्तरीक्षतलात्, पूर्णिमाहरिणाङ्कः पूर्णचन्द्र इत्यर्थः। नीलकण्ठेन हरेण, लम्भितः प्रापितः। मनोभवः कामः। दुर्लभः चौर इत्यर्थः। सज्जनः प्रीतिजन इति भावः। सम्भावयति सम्मोदयति। इन्द्रजालमिव बहुतैन्द्रजालिकानां विभ्र-ममिवेति भावः।

(द) भट्टारकं स्वामिनम्।

हे मृगाङ्कमुखि ! चन्द्रमुखि ! उत्थाय उत्थानेनेति भावः, स्तनयोर्भारेण भङ्गुरं भङ्गप्रवणं मध्यं कटिदेशं मा भञ्जय भग्नं मा कुर्वित्यर्थः, तव ईदृशनिवेशदर्शनात् ईदृगासनवेशदर्शनात् लोचनयोः, नयनयोरिति शेषः, मदनः कामः, अभिलाष इति यावत्,

अवि अ—

जिस्सा पुरो ण हरिदा दलिआ हलिद्दा
रोमञ्चिअं ण कणअं ण अ चंपआइं।
ताइं सुवण्णकुसुमेहिं विलोअणाइं
अच्चेमि जेहिं हरिणक्खि! तुमंसि दिट्ठा॥ § ॥ २२॥

विदूषकः। गब्भघरवासेण सेअसलिलसित्तगत्ता संभूदा तत्थभोदी कप्पूरमंजरी; ता इमं सिचअंचलेण बीजइस्सं दाव। [तथा कुर्वन्]। हा! हा! कधं वारंगपवणेण णिव्वणो पदीवो। [विचिन्त्य स्वगतम्]। भोदु, लोलोज्जाणं ज्जेव गच्छम्ह। [प्रकाशम्]।

अपि च—

यस्याः पुरो न हरिता दलिता हरिद्रा
उज्ज्वलीकृतं न कनकं न च चम्पकानि।
ते सुवर्णकुसुमैर्विलोचने
अर्चयामि याभ्यां हरिणाक्षि! त्वमसि दृष्टा॥

§ गर्भगृहवासेन स्वेदसलिलसिक्तगात्रा सम्भूता तत्रभवती कर्पूरमञ्जरी; तदिमां सिचयाञ्चलेन वीजयिष्यामि तावत्। हा! हा! कथं वातायनपवनेन निर्वाणः

प्रसीदतु प्रसन्नो भवतु, सफलीभवत्विति यावत्; यद्वा—तव लोचनयोः नयनयोः ईदृशनिर्विशेषदर्शनात् सदृशावलोकनदर्शनादिति भावः, मदनः कामः प्रसीदतु प्रसन्नो भवतु, कृतार्थता लभतां, ममेति शेषः॥ २१॥

यस्या इति।—हे हरिणाक्षि! मृगनयने! यस्यास्तव पुरः अग्रतः दलिता विदलिता हरिद्रा न हरिता न हरिद्रा, हरिद्रात्वेन न गण्यतेति भावः, कनकं काञ्चनं न उज्ज्वलीकृतं न उज्ज्वलतया गणितमिति यावत्, चम्पकानि च न, उज्ज्वलीकृतानीति शेषः, सा त्वं याभ्यां दृष्टा अवलोकिता असि, ते विलोचने, मदीये इति शेषः, सुवर्णकुसुमैः अर्चयामि पूजयामि, प्रशंसामीति भावः, तस्य चक्षुःसाफल्यमिति भावः॥२२॥

भो ! अंधआरणच्चिदं वट्टदि, ता णिक्कामम्ह सुरंगामुहेण ज्जेव पमदुज्जाणं दाव । § (ध)

[ सर्वे निष्क्रमणं नाटयन्ति ] ।

राजा । [ कर्पूरमञ्जरीं करे धृत्वा ] ।—

मज्झ हत्थट्ठिदपाणिपल्लवा ईस संवरणवंधुरा भव ।
जं चिराअ कलहंसमंडलो भोदु केलिगमणम्मि दुब्भगा ॥२३॥

[ स्पर्शसुखमभिनीय ] ।

जे णवस्स तिउणस्स कंटआ जे कदंवमउलस्स केसरा ।
अज्ज तुज्झ करफंसमंगिहिं ते हुअंति मह अंगहिं णिज्जिदा ॥*॥२४॥

प्रदीपः । भवतु, लीलोद्यानमेव गच्छामः । भोः ! अन्धकारनृत्यं वर्त्तते, तन्निष्क्रामामः सुरङ्गामुखेनैव प्रमदोद्यानं तावत् ।

* मम हस्तस्थितपाणिपल्लवा ईषत्संवरणबन्धुरा भव ।
याश्चिराय कलहंसमण्डलो भवतु केलिगमने दुर्भगा ॥
ये नवस्य त्रपुसस्य कण्टका ये कदम्बमुकुलस्य केसराः
अद्य तव करस्पर्शसङ्गिभिस्ते भवन्ति ममाङ्गैर्निर्जिताः ॥

(ध) गर्भगृहवासेन अन्तर्गूढवाहिन्या, स्वेदमलिनेन घर्मवारिणा, सिक्तम् आर्द्रीकृतं गात्रं यस्याः तथाभूता । सिचयाञ्चलेन वस्त्राञ्चलेन, "पटोऽस्त्री कर्पटः शाटः सिचय-प्रोतलग्नकाः" इति रभसः । अन्धकारनृत्यम् अन्धकाराणां नृत्यम्, अन्धकारातिशय इति यावत् । सुरङ्गामुखेन सुरङ्गाविवरेण ।

मम हस्ते स्थितः पाणिपल्लवः कराग्रपल्लवः यस्याः तथोक्ता, करधृतमत्करेति भावः, ईषत् मन्दं मन्दं संवरणात् बन्धुरा उन्नता, उन्नामितगात्रेत्यर्थः, भव, यत् येन, तव मन्दमन्दसञ्चरणेनेति भावः, कलहंसमण्डलो चिराय केलिगमने लीलागतौ दुर्भगा अभिधा भवतु, तव मन्दमन्दगतिं दृष्ट्वा कलहंसानां गतिं न केऽपि आद्रियन्तामिति भावः ॥२३॥

ये नवस्य त्रपुसस्य "शसा" इत्याख्यफलविशेषस्य कण्टकाः सूक्ष्मशलाका इति यावत्, ये च कदम्बमुकुलस्य केसराः किञ्जल्काः, "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः; ते अद्य तव करस्पर्शस्य सङ्गिभिः मम अङ्गैः अवयवैः, लोमाग्रैरिति भावः, निर्जिताः भवन्ति, तव करस्पर्शेन मम अतीव रोमहर्षो जात इति भावः ॥२४॥

[नेपथ्ये]।

वैतालिकः। सुहणिबंधणो होदु देवस्स चंदुज्जोओ। (ग)—

भृंगोलि तिमिराणुबंधमलिणे भूमीरुहे व्व ट्ठिदे
संजादा णवभुज्जपिंजरमुही जोण्हाअ पुव्वा दिसा।
मुंचंतो मुचुकुंदकेसरसिरीसोहाणुसारे करे
चंदो पेक्ख कलाक्कमेण अ गदो संपुण्णबिंबत्तणं॥२५॥

अवि अ—

अकुंकुमसचंदणं दहदिसावहूमंडणं
अकंकणसकुंडलं भुअणमंडलीभूसणं।
असोमणसमोहणं मअरलंछणस्साउहं
मिअंककिरणावली णहतलम्मि पुंजिज्जइ॥*॥२६॥

---

सुखनिबन्धनो भवतु देवस्य चन्द्रोद्योतः।—

भृङ्गालि तिमिरानुबन्धमलिने भूमिरुह इव स्थिते
सञ्जाता नवभूर्जपिञ्जरमुखी ज्योत्स्नया पूर्वा दिशा।
मुञ्चन् मुचुकुन्दकेसरश्रीशोभानुसारान् करान्
चन्द्रः पश्य कलाक्रमेण च गतः सम्पूर्णबिम्बत्वम्॥

अपि च—

अकुङ्कुमसचन्दनं दशदिशावधूमण्डनं
अकङ्कणसकुण्डलं भुवनमण्डलीभूषणम्।

(ग) सुखनिबन्धनः सुखहेतुः। चन्द्रोद्योतः चन्द्रालोकः।

भृङ्गालि इति।—तिमिराणां तमसामनुबन्धः सततसञ्चारः तेन मलिनम् आकुलमिति भावः तस्मिन्, भृङ्गालि भृङ्गकुले भूमिरुह इव वृक्ष इव स्थिते चन्द्रोदयानन्तरमपि वृक्षाणां नीलतया अन्धकारमलिनत्वं तिष्ठति, भृङ्गकुलं तथा नीलीभूते सतीत्यर्थः, पूर्वा दिशा प्राची दिक् ज्योत्स्नया चन्द्रिकया नवं भूर्जं भूर्जपत्रं तद्वत् पिञ्जरं पिङ्गलं मुखं यस्याः तथाभूता सञ्जाता। चन्द्रश्च मुचुकुन्दस्य तदाख्यतरुकुसुमस्य ये केसराः किञ्जल्काः तेषां श्रीः सम्पत्तिः तस्याः शोभाम् अनुकुर्वन्तीति तथोक्तान् करान् किरणान् मुञ्चन् वर्षन् कलाक्रमेण [illegible]क्रमेण सम्पूर्णबिम्बत्वं सम्पूर्णमण्डलत्वं गतः प्राप्तः, पश्य अवलोकय॥२५॥

विदूषकः। भो! कणअचण्डेण वण्णिदा चंदुज्जोअलच्छी; ता संपदं माणिक्कचंडस्स अवसरो। * (प)

[ नेपथ्ये ]।

द्वितीयो वैतालिकः।—

दज्झंतागुरुधूपवट्टिकलिआ दीप्पंतदीवोज्जला
लंबिज्जंतविचित्तमोत्तिअलदा मुंचतपारावदा।
सज्जिज्जंतमणोज्जकेलिसअणा जप्पंतदूईजणा
सज्जुक्कंठवलंतमाणिणिजणा वट्टंति कीलाघरा॥ † ॥ २७॥

अस्तोपचलमौक्तिकं मकरलाञ्छनस्यायुधं
मृगाङ्कनिकरावली नभस्तले पुञ्जीभवति॥

भोः! कनकचण्डेन वर्णिता चन्द्रोद्योतलक्ष्मीः; तत् साम्प्रतं माणिक्य-
चण्डस्यावसरः।

दह्यमानागुरुधूपवर्त्तिकलिका दीप्यमानदीपोज्ज्वला
लम्ब्यमानविचित्रमौक्तिकलता मुच्यमानपारावताः।
सज्जीक्रियमाणमनोज्ञकेलिशयना जल्पद्दूतीजनाः
सद्यउत्कण्ठावलन्मानिनीजना वर्त्तन्ते क्रीडागृहाः॥

नास्ति कुङ्कुम गन्धद्रव्यविराग: यस्मिन् तथोक्तं, नास्ति चन्दनं यस्मिन् तत्, दृश्यानां स्त्रियाश्रमूना दिगङ्गनानां मण्डनम् अलङ्करणं, नास्ति कञ्चुकः कञ्चुकवस्त्रविशेषः यस्मिन् तथोक्तम्, अकुण्डलं कुण्डलरहितं भुवनमण्डल्याः जगतीवध्वा इति भावः, भूषणम् अलङ्कारः, अस्तोपचलं न शोभनं, न शोभमानम्, न मोहनं न मोहजनन-शीलम्, मकरध्वजस्य कामस्य आयुधम् अस्त्रं मृगाङ्कनिकरावली चन्द्रमयूखनिचयः नभस्तले पुञ्जीभवति राशीभवति। रूपकालङ्कारः॥ २६॥

(प) कनकचण्डेन तदाख्येन वैतालिकेन। चन्द्रोद्योतलक्ष्मीः चन्द्रालोकश्रीः। माणिक्यचण्डस्य तदाख्यस्य वैतालिकस्य।

क्रीडागृहाः क्रीडामन्दिराणि दह्यमानाः अगुरुधूपानां वर्त्तय एव कलिका यैस्तथोक्ताः, सौगन्ध्यसम्भारार्थमिति भावः; दीप्यमानेन प्रज्वाल्यमानेन दीपेन उज्ज्वलाः प्रकाशिताः, लम्ब्यमानाः आन्दोल्यमानाः विचित्रा रम्याः मौक्तिकलताः मुक्ताहाराः येषु तथाविधाः, शोभार्थमिति भावः; मुच्यमानाः, बध्यमानाद्विति

अवि अ—

दें‍ता कप्पूरपूरच्छुरणमिव दिसासुंदरीणं मुहेसु
सुक्कं जोण्हं किरंतो भुअणजणमणाणंदणं चंदणं व्व ।
जिण्णं कंदप्पकंदं तिहुअणकलणाकंदलिल्लं कुणंता
जादा एणंकपादा सअलजलहरामुक्कधाराणुसारा ॥*॥ २८ ॥

विदूषकः ।—

दिसवहुत्तंसो णहसरहंसो ।
णिहुवणकंदो प्पसरइ चंदो ॥†॥ २९ ॥

अपि च—

ददतः कर्पूरपूरच्छुरणमिव दिशासुन्दरीणां मुखेषु
शुभ्रां ज्योत्स्नां किरन्तो भुवनजनमनोनन्दनं चन्दनमिव ।
जीर्णं कन्दर्पकन्दं त्रिभुवनकलनाकन्दलितं कुर्वन्तो
जाता एणाङ्कपादाः सकलजलधरोन्मुक्तधारानुसाराः ॥

दिग्वधूत्तंसो नभःसरोहंसः ।
निधुवनकन्दः प्रसरति चन्द्रः ॥

शेषः, पारावताः कपोता येषु तथाभूताः, तेषां सुरतकेल्युद्दीपकत्वादिति भावः; सज्जीक्रियमाणानि पुष्परचनादिभिरिति भावः, मनोज्ञानि मर्महराणि केलिशयनानि क्रीडाशय्याः येषु तथाविधाः, जल्पन्ति आज्ञपयन्ति दूतीनां शतानि समूहाः येषु तथोक्ताः, तथा शय्याया उत्सङ्गे पार्श्वे, न तु शय्यातले इति भावः, वलन् तिष्ठन् मानिनीजनः मानवती नारी येषु तथाविधाः वर्तन्ते ॥ २७ ॥

सकलैः जलभरैः जलधरैः मेघैः उन्मुक्ता परिसृष्टा या धारा ताम् अनुकुर्वन्तीति तथाविधाः, एणाङ्कपादाः चन्द्रकिरणाः दिश एव सुन्दर्यः तासां मुखेषु कर्पूरपूरैः कर्पूरचूर्णनिकरैः छुरणमिव लेपनमिव ददतः अर्पयन्तः, भुवनजनानां मनसः नन्दनम् आनन्दजननं चन्दनमिव शुभ्रां विशदां ज्योत्स्नां किरन्तः वर्षन्तः, जीर्णं तिरस्कृतं, मालिन्यकृतमिति भावः, कन्दर्पकन्दं कामगुल्मं त्रिभुवनस्य कलनया व्यापनेन कन्दलितं पल्लवितं, प्रवृद्धमिति यावत्, कुर्वन्तः काममुद्दीपयन्त इति भावः, जाताः ॥ २८ ॥

दिश एव वध्वः तासाम् उत्तंसः कर्णभूषणं, नभ आकाशमेव सरः तस्य हंसः, निधुवनस्य

कुरङ्गिका।—

ससहररइदगव्वो माणिणिमाणघट्टो।
णवचंपअकोदंडो मअणो जअइ पअंडो ॥३०॥

[कर्पूरमञ्जरीं प्रति]। पिअसहि! तुए किदं चंदवण्णण महाराअस्स पुरदो पढ़िस्सं। *

[कर्पूरमञ्जरी लज्जते। कुरङ्गिका पठति]।

मंडले ससहरस्स गोरए दंतपंजरविलासचोरए।
भादि लंछणमिओ फुरंतओ केलिकोइलतुलं धरंतओ ॥†॥ ३१॥

राजा। अहो! कप्पूरमंजरीए अहिणवत्थदंसणं, रमणीओ सद्दो, उत्तिविचित्तदा, रसणिस्संदो अ। ‡ (फ)

* शशधररचितगर्वो मानिनीमानघट्टः।
नवचम्पककोदण्डो मदनो जयति प्रचण्डः॥
प्रियसखि! त्वया कृतं चन्द्रवर्णनं महाराजस्य पुरतः पठिष्यामि।

† मण्डले शशधरस्य गौरे दन्तपञ्जरविलासचौरे।
भाति लाञ्छनमृगः स्फुरन् केलिकोकिलतुलां धारयन्॥

‡ अहो! कर्पूरमञ्जर्या अभिनवार्थदर्शनं, रमणीयः शब्दः, उक्तिविचित्रता, रसनिष्यन्दश्च।

सुरतस्य, वनविभ्रमस्येति ध्वनिः, चन्द्रः मुख्यविशेषः, उद्दीपक इति भावः, चन्द्रः प्रसरति उदयते ॥२९॥

शशधरेण चन्द्रेण रचितः जनितः गर्वो यस्य तथोक्तः, मानिनीनां मानवतीनां मानस्य घट्टः पेषणयन्त्रविशेषः, "जाँता" इति प्रसिद्धः, नवं चम्पकं कोदण्डः धनुर्यस्य तथाभूतः, अत एव प्रचण्डः समुद्धतः, मदनः जयति सर्वोत्कर्षेण विराजते इत्यर्थः ॥३०॥

गौरे गौरवर्णे, धवले इत्यर्थः, अत एव दन्तपञ्जरस्य हस्तिदन्तनिर्मितस्य पञ्जरस्य पक्षिनिरोधभाजनविशेषस्य विलासं शोभां चोरयतीति तथोक्ते, दन्तपञ्जरानुकारिशोभे इत्यर्थः, शशधरस्य चन्द्रस्य मण्डले लाञ्छनमृगः कलङ्करूपो मृगः, केलिकोकिलस्य क्रीडापिकस्य, तुलां साम्यं धारयन् भाति दीप्यते ॥३१॥

[तां प्रति]—

मा कहिं पि वअणेण विब्भमो
होउ इत्ति तुह मुद्धमिंदुणा।
लंछणच्छलमसीविसेसओ
पेक्ख बिंबफलए णिए किदो ॥ २२ ॥

किं अ—

पंडुरेण जइ रज्जए मुहं कोमलंगि! खड़िआरसेण दे।
दिज्जए उण कपोलकज्जलं ता लहेदि ससिणो विडंबणं ॥*॥ २३॥

मा कदाचिदपि वदनेन विभ्रमो भवत्विति तव मुग्धे इन्दुना।
लाञ्छनच्छलमषीविशेषकः पश्य बिम्बफलके निजे कृतः ॥

किञ्च—

पाण्डुरेण यदि रज्यते मुखं कोमलाङ्गि! खटिकारसेन ते।
दीयते पुनः कपोलकज्जलं तदा लभते शशिनो विडम्बनम् ॥

(फ) अहो! आश्चर्यम्। आननः नूतनः, केनापि अनाविष्कृत इति भावः, अर्थः वाच्यः तस्य दर्शनं दृष्टिः, ज्ञानाभाव इति यावत्, रमणीयः मनोहरः, शब्दः प्रयुक्त इति शेषः, उक्तौ भारतीविन्यासस्य विचित्रता चमत्कारिता, रसस्य स्वादविशेषस्य निष्यन्दः निःसरणम्।

नूनं मन्ये, तव वदनेन मुग्धेन सह कदाचिदपि विभ्रमः चन्द्रोऽयमिति विशिष्टा भ्रान्तिः, लोकस्येति शेषः, मा भवतु इति हेतोः इन्दुना चन्द्रेण निजे स्वकीये बिम्बफलके मण्डलतले लाञ्छनच्छलेन कलङ्कव्याजेन मषीविशेषकः कृतः, पश्य अवलोकय। तव मुखं निष्कलङ्कचन्द्रः, अयन्तु गगनस्थः सकलङ्क इति व्यतिरेकालङ्कारः प्रकृतकलङ्कनिषेधेन मषीव्यापकरूपापह्नुत्याऽनुप्राणितः ॥२२॥

हे कोमलाङ्गि! यदि पाण्डुरेण धवलेन खटिकारसेन खटिकाद्रवेण ते तव मुखं रज्यते लिप्यते, लिप्यते इति यावत्, पुनः किञ्च कपोले कज्जलं दीयते, तदा एतत् तव मुखं शशिनः चन्द्रस्य विडम्बनम् अनुकरणं लभते, शशिनमनुकरो-तीत्यर्थः ॥२३॥

[ चन्द्रमुद्दिश्य ]

मुक्कमंक ! हरिणंक । किं तुमं
सुंदरीपरिसरेण हिंडसि ?।
गोरगंडपरिपंडुरत्तणं
पेक्ख दिसममुणा मुहे ण दे ?॥ * ॥ ३४ ॥

[ नेपथ्ये महान् कलकलः। सर्वे आकर्णयन्ति ]।

राजा। किं उण एस कोलाहलो ?। †

कर्पूरमञ्जरी। [ सशाध्वसम् ]। प्पिअसहि ! एदमवगमिअ आअच्छ। ‡ (ब)

[ कुरङ्गिका निष्क्राम्य प्रविशति ]।

विदूषकः। देवीए प्पिअवअस्सस्स वंचणा किदेत्ति तक्केमि। §

कुरङ्गिका। प्पिअसहि ! भट्टारअस्स वंचणं कादुअ

* मुक्ताङ्क ! हरिणाङ्क ! किं त्वं सुन्दरीपरिसरेण हिण्डसे ?।
गौरगण्डपरिपाण्डुरत्वं पश्य दृशममुना मुखे न ते ?॥

† किं पुनरेष कोलाहलः ?।

‡ प्रियसखि ! एतदवगम्य आगच्छ।

§ देव्या प्रियवयस्यस्य वञ्चना कृतेति तर्कयामि।

हे मुक्ताङ्क ! निःशङ्क ! हरिणाङ्क ! चन्द्र ! परकीयसुन्दरीणां परिसरेष भ्रमणात् तव शङ्कितत्वमुचितमेवेति भावः; त्वं सुन्दरीणां परिसरेण समवायेन, सङ्गेनेत्यर्थः, किं कथं हिण्डसे भ्रमसि ? अमुना सुन्दरीपरिसरेण ते तव मुखे गौरयोः धवलयोः गण्डयोः कपोलयोः परिपाण्डुरत्वं न दृशम ? अपि तु दृशमेव पश्य। लोके च दुष्कृतकारिणो गण्डे चूर्णं मलीय दत्त्वा निष्कासनं प्रसिद्धम्; तव तु अनौचित्य-करत्वेन अत एव गण्डे कलङ्करूपमलीकारणं, सुन्दरीणाञ्च कपोलधावल्यरूपचूर्णदानञ्च घटितमिति भावः ॥३४॥

(ब) एतत् कोलाहलकारणमित्यर्थः। अवगम्य ज्ञात्वा।

तुए सह संगमं जाणिअ आअच्छदि देवी ; तेण कुज्ज-वामण-किरात-वरिसवर-सोविदल्लाणं एस कोलाहलो । * (भ)

कर्पूरमञ्जरी । [ सभयम् ] । ता मं पेसदु महाराओ, जेणाह-मिमिणा सुरंगामुहेण ज्जेव्व पविसिअ रक्खाघरअं गच्छेमि, जह देवी महाराएण सह संगमं ण जाणादि । †

[ इति निष्क्रान्ताः सर्वे ] ।

इति तृतीयजवनिकान्तरम् ।

# अथ चतुर्थजवनिकान्तरम् ।

[ ततः प्रविशति राजा विदूषकश्च ] ।

राजा । अहो ! गाढअरो गिम्हो, पवणो अ पअंडो, ता कधं णु सहिदव्वो ; जदो—

इह कुसुमसरेक्कगोअराणं
इदमुभअं वि सुदुस्सहं त्ति मण्णे ।
जरठरइकरालिदो अ कालो
तह अ जणेण पिएण विप्पलंभो ॥*॥ १ ॥

* प्रियसखि ! भट्टारकस्य वञ्चनां कृत्वा त्वया सह सङ्गमं ज्ञात्वा आगच्छति देवी ; तेन कुब्ज-वामन-किरात-वर्षवर-सौविदल्लानामेष कोलाहलः ।

† तत् मां प्रेषयतु महाराजः, येनाहमनेन सुरङ्गामुखेनैव प्रविश्य रक्षागृहकं गच्छामि, यथा देवी महाराजेन सह सङ्गमं न जानाति ।

---

* अहो ! गाढतरो ग्रीष्मः, पवनश्च प्रचण्डः, तत् कथं नु सोढव्यः ; यतः,—
इह कुसुमशरैकगोचराणामिदमुभयमपि सुदुःसहमिति मन्ये ।
जरठरविकरालितश्च कालस्तथा च जनेन प्रियेण विप्रलम्भः ॥

(भ) कुब्जादीनामन्तःपुरचराणामिति भावः । सौविदल्लाः कञ्चुकिनः ।

---

इह संसारे कुसुमशरस्य कामस्य एकगोचरा एकमात्रविषयाः तेषां कामार्तानामित्यर्थः, जरठेन प्रचण्डेन रविणा सूर्येण करालितः कवलितः कालः ग्रीष्मसमय

विदूषकः :—

एक्के दाव मम्महद्द बाहणिज्जा अस्से दाव सोसणिज्जा ।
अम्हारिसो उण जणो ण कामस्स बाहणिज्जो ण तावस्स
सोसणिज्जो ॥ * ॥ २ ॥

[ नेपथ्ये ] ।

ता किं ण क्खु दे मूलुप्पाडिअचूडिआविअलं सोसं करिस्से ? । † ( क )

राजा । [ विहस्य ] । वअस्स ! लीलावणसच्छंदचारिणा केलिसुएण किं भणिदं ? । ‡

विदूषकः । [ सक्रोधम् ] । आ दासीए उत्त ! सूलाअरणजोग्गोसि । § ( ख )

* एके तावत् मदनस्य बाधनीयाः अन्ये तावत् शोषणीयाः ।
अस्मादृशः पुनर्जनो न कामस्य बाधनीयो न तापस्य शोषणीयः ॥

† तत् किं न खलु ते मूलोत्पाटितचूडिकाविकलं शोषं करिष्ये ? ।

‡ वयस्य ! लीलावनस्वच्छन्दचारिणा केलिशुकेन किं भणितम् ? ।

§ आः दास्याः पुत्र ! शूलाकरणयोग्योऽसि ।

इत्यर्थः, तथा प्रियेण जनेन विप्रलब्धः विरहश्च, इदमुभयमपि दुःसहं दुःखिनापि सोढुमशक्यम्, इति मन्ये सम्भावयामीत्यर्थः ॥१॥

एके कतिपये जनाः मदनस्य कामस्य बाधनीयाः पीडनीयाः, अन्ये अपरे जनाः शोषणीयाः, निदाघतापेनेति शेषः ; अस्मादृशः जनः पुनः किन्तु कामस्य मदनस्य न बाधनीयः पीडनीयः, न शोषणीयश्च ॥ २ ॥

(क) मूलात् उत्पाटितया उन्मूलितयेत्यर्थः, चूडिकया केशनिचयेन विकलं विह्वलम् ।

(ख) शूलेति ।—शूलाकरणं शूले आरोपणं, तद्योग्यः तदर्हः, दुष्टत्वात् शूलदानस्य योग्यत्वमिति भावः ।

[ नेपथ्ये ]

मव्वं तुम्हारिसाहिंतो संभाविज्जदि, जइ मे ण होंति पक्खावलीओ। * (ग)

राजा। [ विलोक्य ]। कहं उड्डीणो ज्जेव्व। †

[ विदूषकं प्रति ]।—

णिमातलिणवित्थरा तह दिणेसु बहुत्तणं
ससी लहदि खंडणं तह अ चंडविंबो रई।
णिदाहदिअसेसु विप्फुरदि जस्स एव्वं कमो
कहं ण स विही तदो खुरसिहाइं खंडिज्जदि ? ॥ ३ ॥

किं अ, णिउणं सेवणिज्जो जइ सुहसंगमो भोदि। (घ) जदो—

* सर्वं युष्माहृशेभ्यः सम्भाव्यते, यदि मे न भवन्ति पक्षावल्यः।

† कथमुड्डीन एव।

निशाऽसकोलविस्तरा तथा दिनेषु बहुत्वं
शशी लभते खण्डनं तथा च चण्डबिम्बो रविः।
निदाघदिवसेषु विस्फुरति यस्यैवं क्रमः
कथं न स विधिस्ततः क्षुरशिखाभिः खण्ड्यते ? ॥

किञ्च, निपुणं सेवनीयो यदि शुभसङ्गमो भवति। यतः—

(ग) पक्षावल्यः पक्षराजयः। पक्षो अहम् तत्पतनं जानामि, कथं युष्माभिः मम शूले निक्षेपः सम्भवतीति भावः।

निशा रात्रिः असलीनः अलं गतः विस्तरः यस्याः तथोक्ता, खर्वेति भावः, तथा दिनेषु बहुत्वं वृद्धिः, अत एव शशी चन्द्रः खण्डनं ह्रासम्, अल्पचन्द्राविर्भावनिति भावः, लभते, निशाया अल्पत्वादिति भावः, तथा रविश्च चण्डबिम्बः, दीर्घकालप्रतापित्वादिति भावः, निदाघदिवसेषु ग्रीष्मदिनेषु यस्य विधेः एवं क्रमः नियमः, विस्फुरति प्रसरति, स विधिः ततः कारणात्, अयुक्ताचरणादिति भावः, क्षुरशिखाभिः क्षुरधाराभिः कथं न खण्ड्यते ? न छिद्यते ? ईदृशाचारविधिरवश्यं छेत्तव्य इति भावः ॥३॥

(घ) निपुणं चाक यथा तथा सेवनीयः, एव चाक इति शेषः, शुभसङ्गमः शुभेन प्रियेण सङ्गमः, प्रियसङ्गमे यं परिश्रमो न गण्यते इति भावः।

मज्झण्हे सिरिखंडपंककलणा आ संझमाद्दंसुअं
कीलामज्जणमा-प्पदोससमअं साअं सुरा सीअला ।
गिम्हे पच्छिमजामिणीणिहुवणं जं किं पि पंचेसुणो
एदे पंच सिलीमुहा विजइणो सेसा सरा जज्जरा ॥ † ॥ ४ ॥

विदूषकः । मा एव्वं भण ।—

पंडुच्छविच्छुरिदणाअलदादलाणं
साहारतेल्लपरिपेसलपोफलाणं ।
कप्पूरपंसुपरिवासिदचंदणाणं
भद्दं णिदाहदिअसाणं वअस्स ! भोदु ॥ * ॥ ५ ॥

मध्याह्ने श्रीखण्डपङ्ककलना आसन्ध्यमार्द्रांशुकं
कीलामज्जनमा-प्रदोषसमयं सायं सुरा शीतला ।
ग्रीष्मे पश्चिमयामिनीनिधुवनं यत् किमपि पञ्चेषोः
एते पञ्च शिलीमुखा विजयिनः शेषाः शरा जर्जराः ॥

मा एवं भण ।—

पाण्डुच्छविच्छुरितनागलतादलानां
सहकारतैलपरिपेशलपूगफलानाम् ।
कर्पूरपांशुपरिवासितचन्दनानां
भद्रं निदाघदिवसानां वयस्य ! भवतु ॥

---

ग्रीष्मे निदाघे मध्याह्ने श्रीखण्डपङ्कस्य चन्दनरसस्य कलना चर्चा, अङ्गेषु लेपन-मित्यर्थः, आसन्ध्यं सन्ध्याकालपर्यन्तम् आर्द्रांशुकम् आर्द्रं वसनम्, आप्रदोषसमयं प्रदोषसमयपर्यन्तं कीलामज्जनं जलक्रीडनमित्यर्थः, सायं समये शीतला सुरा मद्यं, तत्सेवनमित्यर्थः, यत् किमपि अनिर्वचनीयमित्यर्थः पश्चिमयामिन्यां रात्रिशेषे निधुवनं सुरतं, पञ्चेषोः कामस्य एते पञ्च शिलीमुखाः शराः विजयिनः विजयशालिनः, भवन्तीति शेषः, शेषाः अन्ये शराः जर्जराः क्षीणाः, निष्फला इति भावः ॥४॥

हे वयस्य ! सखे ! पाण्डुभिः छविभिः प्रभाभिः छुरिताः व्याप्ताः नागलतानां ताम्बूलीनां दलाः पर्णानि येषु तथोक्तानां, सहकाराः चूतफलानि, तैलानि परिपेशलानि सुकोमलानि पूगफलानि गुवाकफलानि येषु तथाविधानां, कर्पूरपांशुभिः कर्पूररजोभिः

राजा । एदं उण एत्थ रमणिज्जं ।—

सपंचमतरंगिणो स्रवणसीअला वेणुणो

समं सिसिरवारिणा बहलसीअला वारुणी ।

सचंदणघणत्थणी सअणसीअला कामिणी

णिदाहदिअसोसहं सहजसीअलं कस्सवि ॥ ६ ॥

अवि अ—

कोलुत्तंसो सिरीसं सिहिणपरिसरे सिंदुवाराण हारो

अंगे आद्दं वरिल्लं रमणपणइणी मेहला उप्पलेहिं ।

टीमं टीकंटओमं णवविमवलआ कामवेज्जो मणोज्जो

तावातंकक्खमाणं महुसमए गदे एस वेसोऽवलाणं ॥ * ॥ ७ ॥

इदं पुनरत्र रमणीयम् ।—

सपञ्चमतरङ्गिणः श्रवणशीतला वेणवः

समं शिशिरवारिणा बहलशीतला वारुणी ।

सचन्दनघनस्तनी शयनशीतला कामिनी,

निदाघदिवसौषधं सहजशीतलं कस्यापि ॥

अपि च—

कर्णोत्तंसः शिरीषं स्तनपरिसरे सिन्दुवाराणां हारः

अङ्गे आर्द्रं वस्त्रं रमणप्रणयिनी मेखलोत्पलैः ।

इन्दीवरैः कन्दर्पाः नवविमलवलया कामवैद्यो मनोज्ञः

तापातङ्कक्षमाणां मधुसमये गते एष वेषोऽबलानाम् ॥

परिवासितानि चन्दनानि येषु तथाभूतानां, निदाघदिवसानां धौतादिनानां भद्रं कुशलं भवतु, चिरं तिष्ठतु धौतकाश्च इति भावः ॥ ५ ॥

सपञ्चमाः पञ्चमस्वरेण युक्ताः तरङ्गिणः रागवन्तः श्रवणशीतलाः श्रुतिशीतलाः, श्रोत्रसुखा इत्यर्थः, वेणवः वंशीवाद्यानि, शिशिरवारिणा शीतलजलेन समं सह बहलशीतला सुष्ठुशीतलकारीत्यर्थः, वारुणी सुरा, सचन्दनौ चन्दनाक्तौ घनौ निबिडौ, कठिनाविति यावत्, स्तनौ यस्याः तथाभूता, शयनशीतला शय्यासुखदायिनीत्यर्थः, कामिनी, एतत् सर्वं सहजशीतलं स्वभावशिशिरं वस्तु कस्यापि जनस्य भाग्यवत इति यावत्, निदाघदिवसस्य औषधं शान्तिकरमिति भावः ॥ ६ ॥

मधुसमये वसन्तकाले गते निदाघे इत्यर्थः, कोमलया कृतः उत्तंसः कर्णभूषणं

[विदूषकं प्रति]। वअस्स! अत्थि तग्गदा कावि वत्ता?। *

विदूषकः। अत्थि, सुणादु पिअवअस्सो, कधेमि सुहासिदं दे। जदो प्पहुदि कप्पूरमंजरी रक्खाभवणादो सुरंगादुआरे देवीए दिट्ठा, तदो प्पहुदि तं सुरंगादुआरं देवीए बहल-सिलासंचएण णीरंधं कदुअ पिहिदं। अणंगसेणा कलिंगसेणा कामसेणा वसंतसेणा विब्भमसेणेत्ति पंच सेणाणामधेआओ चामरधारिणीओ फारप्फुरंतकरवालहत्थपाइक्कसहस्सेण सह कारामंदिरस्स रक्खाणिमित्तं पुव्वदिसि णिउत्ताओ।

अणंगलेहा चित्तलेहा चंदलेहा मिअंकलेहा विब्भम-लेहेत्ति लेहाणामधेआओ पंच सेरंधीओ पुंखिदसिलीमुहधणु-हत्थेण णिविडणिबद्धतूणीरदुद्धरेण धाणुक्कसहस्सेण समं दक्खि-णाए दिसाए णिवेसिदाओ।

---

येषां ते च मनांसि ददति न रतिं प्रियतम समापिनः

तेषां यान्ति जगति दीर्घतमा मासोपमा वासराः ॥

वयस्य! अस्ति तद्गता कापि वार्त्ता?।

अस्ति, शृणोतु प्रियवयस्यः, कथयामि सुभाषितं ते। यतः प्रभृति कर्पूरमञ्जरी रक्षाभवनात् सुरङ्गाद्वारे देव्या दृष्टा, ततः प्रभृति तत् सुरङ्गाद्वारं देव्या बहुलशिलासञ्चयेन नीरन्ध्रं कृत्वा पिहितम्। अनङ्गसेना कलिङ्गसेना कामसेना वसन्तसेना विभ्रमसेनेति पञ्च सेनानामधेयाश्चामरधारिण्यः स्फारस्फुरत्करवालहस्त-पदातिसहस्रेण सह कारामन्दिरस्य रक्षानिमित्तं पूर्वदिशि नियुक्ताः।

अनङ्गलेखा चित्रलेखा चन्द्रलेखा मृगाङ्कलेखा विभ्रमलेखेति लेखानामधेयाः

---

रचनया रम्यः मनोज्ञः तस्मिन्, जने प्रियतमे इति यावत्, सज्जनः, भवतीति शेषः, तेषां दीर्घा अपि दिवसाः झटिति क्षणमिव वसन्ते गच्छन्ति, ते च प्रियजना इति भावः, येषां मनसि रतिं सुखमानन्दमिति यावत्, न ददति, जगति संसारे तेषां प्रियतम समापिनः वासराः दिवसाः मासोपमाः मासतुल्याः, दीर्घतमा अतिदीर्घाः यान्ति गच्छन्ति ॥ ९ ॥

कंदमाला चंदणमाला कुवलअमाला कंचणमाला बउलमाला मंगलमाला माणिक्कमालेत्ति सत्त मालेत्तिणामधेआओ णवणिम्मिदकुंतहत्थपाइक्कसहस्सेण समं तंबूलकरंकवाहिणीओ पच्छिमाए दिसाए णिवसिदाओ।

अणंगकेली पुक्खरकेली कंदप्पकेली मंदरकेली कंदोट्टकेलीत्ति पंच केलीत्तिणामधेआओ मज्जणकारिणीओ फलअखग्गकंपविदुरिल्लेण पाइक्कसहस्सेण समं उत्तरदिसाए आणत्ताओ।

ताणं वि उण उवरि मंदिरावदी केलिवदी कल्लोलवदी तरंगवदी अणंगवदीत्ति पंच वदीत्तिणामधेआओ परिचारिआकुमारीओ कणअचित्तदंडहत्थाओ सुहासिअपाढिआओ वंदीणामधेआओ सेणाए अहक्खीकिदाओत्ति। ण (ङ)

---

पञ्च देव्यः पुष्करिणीमुखपर्यन्तेन अविकृतिपक्षतुरगोद्दुर्दुरेण पादातसहस्रेण समं दक्षिणस्यां दिशि निवासिताः।

कुन्दमाला चन्दनमाला कुवलयमाला काञ्चनमाला बकुलमाला मङ्गलमाला माणिक्यमालेति सप्त मालेतिनामधेया नवनिर्मितकुन्तहस्तपदातिसहस्रेण समं ताम्बूलकरङ्कवाहिन्यः पश्चिमायां दिशि निवेशिताः।

अनङ्गकेलिः पुष्करकेलिः कन्दर्पकेलिः सुन्दरकेलिः उत्पलकेलिरिति पञ्च केलीतिनामधेया मज्जनकारिण्यः फलकखड्गकम्पनोद्भटेन पदातिसहस्रेण सममुत्तरदिशि आज्ञप्ताः।

तासामपि पुनरुपरि मन्दिरावती केलिवती कल्लोलवती तरङ्गवती अनङ्गवतीति पञ्च वतीतिनामधेयाः परिचारिकाकुमार्यः कनकचित्रदण्डहस्ताः सुभाषितपाठिका बन्दीनामधेयाः सेनाया अध्यक्षीकृता इति।

(ङ) सुभाषितं सुवचनं, मनःप्रीतिकरमिति भावः। नीरन्ध्रं छिद्ररहितम्। पिहितम् आच्छादितम्। स्फारेति।—स्फार अत्यर्थं स्फुरन् द्योतमानः करवालः असिः करे यस्य तादृशं यत् पदातिसहस्रं पादचारिसैन्यसमूहः तेन। कारामन्दिरस्य कारागारस्य। देव्यः स्वाधीनाः परगृहवासिन्यः प्रसाधननिपुणाः स्त्रीभेदाः। पुङ्खितेति।—पुङ्खितः संहतः शिलीमुखः शरो यत्र तादृशं धनुः हस्ते यस्य तथोक्तेन।

राजा। अहो! देवीए सामग्गी अंतउरोचिदा। * (च)

विदूषकः। भो वअस्स! एसा देवीए सारंगिआ णाम सही किंपि णिवेदिदुं पेसिदा। †

[ ततः प्रविशति सारङ्गिका ]।

सारङ्गिका। जअदु जअदु भट्टा। देव! देवी विण्णवेदि— "अज्ज चतुत्थदिअहे भविस्सवडसावित्तीमहूसवोवअरणाइं केलि-विमाणप्पसादमारुहिअ पेक्खिदव्वाइं" त्ति। ‡ (छ)

राजा। जं देवी आणवेदि। §

* अहो! देव्याः सामग्री अन्तःपुरोचिता।

† वयस्य! एषा देव्याः सारङ्गिकानाम सखी किमपि निवेदितुं प्रेषिता।

‡ जयतु जयतु भर्त्ता। देव! देवी विज्ञापयति—"अद्य चतुर्थदिवसे भावि-वटसावित्रीमहोत्सवोपकरणानि केलिविमानप्रासादमारुह्य प्रेक्षितव्यानि" इति।

§ यत् देवी आज्ञापयति।

निविडेति।—निविडं दृढं यथा तथा निबद्धेन तूणीरेण दुर्द्धरं दुरासदं तेन। बाहुल्य-सङ्घेन धनुर्धरश्रेण्यानिबद्धेनेति यावत्। नतेति —नता निम्निताः आञ्चिताः कुन्ताः अस्त्रविशेषाः इत्येषु येषां तादृशं यत् पदातिसङ्घस्य तेन। भञ्जनकातिरग्र खान-कारयितः। फलकस्य चर्मनिर्मितस्य "ढाल" इति प्रसिद्धस्य, खड्गस्य च काम्पन सञ्चालनेन भीषणं भयङ्करं तेन। चाम्पताः चालिताः व्यापिता इत्यर्थः। परिचरन्ति सेवन्ते इति तथोक्ताः तासां कुमार्य्यः कन्यकाः। कनककिङ्किणीदण्डधराः काञ्चन-किङ्किणीदण्डपाणयः।

(च) सामग्री परिचर्य्योपकरणम्। अन्तःपुरस्य अवरोधस्य उचिता योग्या।

(छ) अद्येति।—अद्य चतुर्थदिवसे एतेन गतेषु पूर्वेषु त्रिषु दिवसेषु तदुत्सव-व्यापारः आसीदिति, शेषदिने च राज्ञसदकोभ्रं सनसिकोत्सवयोतनार्थमिति च व्यज्यते। भाविति।—भाविनः भविष्यतः वटसावित्रीमहोत्सवस्य वटवासनस्य सावित्र्या देव्या महोत्सवस्येत्यर्थः, उपकरणानि साधनानि। केलिविमानप्रासादं क्रीड़ार्थं विमानप्रासादं देवयानसदृशराजमन्दिरमित्यर्थः।

[ चेटी निष्क्रान्ता। उभौ प्रासादाधिरोहणं नाटयतः ]।

[ ततः प्रविशति चर्चरी ]।

विदूषकः।—

मोत्ताहलिल्लाहरणुच्चआओ लास्सावसाणे चलिअंसुआओ।
सिंचंति अण्णोण्णमिमीअ पेक्ख जंताजलेहिं मणिभाअणेहिं ॥१०॥

इदो अ—

परिब्भमंतीअ विचित्तबंधं इमाइ दोसोलह णच्चणीओ।
खेलंति तालाणुगदप्पदाओ तुह्मांगणे दीसइ दंडरासो ॥ ११ ॥

समांससीस्सा समबाहुहत्था रेहाविसुद्धा अपरा अ देंति।
पंतीहिं दोहिं लअतालबंधं परप्परं साहिमुहा हुवंति ॥ १२ ॥

मुक्ताफलाभरणोच्चया लास्यावसाने चलितांशुकाः।
सिञ्चन्त्यन्योऽन्यमिमाः पश्य यन्त्रजलैर्मणिभाजनैः॥

इतश्च—

परिभ्रमन्त्यो विचित्रबन्धम् इमा द्विषोडश नर्तक्यः।
खेलन्ति तालानुगतपदास्त्वदङ्गने दृश्यते दण्डरासः॥
समांसशीर्षाः समबाहुहस्ता रेखाविशुद्धा अपराश्च ददति।
पङ्क्तिभ्यां द्वाभ्यां लयतालबन्धं परस्परं साभिमुखा भवन्ति॥

मुक्ताफलानि आभरणोच्चयाः अलङ्कारसञ्चयाः यासां तथोक्ताः मौक्तिकहारादिभिरलङ्कृता इति यावत्, चलितांशुकाः प्रचलद्वसनाः इमाः, नर्त्यः इति शेषः, लास्यावसाने नृत्यविरतौ यन्त्रेण जलानि येषु तैः यन्त्रनिर्गतजलैरिति यावत्, मणिभाजनैः रत्नमयजलपात्रैः अन्योऽन्यं परस्परं सिञ्चन्ति ॥ १० ॥

इमाः द्विषोडश द्वात्रिंशत् नर्तक्यः विचित्रः बन्धो यस्मिन् तत् यथा तथा परिभ्रमन्त्यः, तालेन लयेन अनुगतः पदः चरणविक्षेपः यासां तथाभूताः सत्यः खेलन्ति क्रीडन्ति; अतः तव अङ्गने चत्वरे दण्डरासः दण्डाकारेण स्थिता मण्डलाबन्धवत् क्रीडनविशेषः दृश्यते ॥११॥

अपराश्च, नर्तक्य इति शेषः, समांसशीर्षाः तुल्यस्कन्धशिरसः, समबाहुहस्ताः

मोत्तूण अस्सा मणिवारणाइं जंतेहिं धारासलिलं खिवंति ।
पडंति ताणं च पिआणमंगे मणोहुओ वारणबाणकप्पा ॥१३॥
इमा मसीकज्जलकालकाआ तिक्खच्छचावा अ विलासिणीओ
पुलिंदरूवेण जणस्स हासं समोरपिच्छाहरणा कुणंति ॥ १४ ॥
इत्थे महामंसवलीधराओ हुंकारफेक्काररवा रउद्दा ।
णिसाअरीणं पडिसीसएहिं अस्सा सुसाणाभिणअं कुणंति ॥१५॥

मुक्त्वा अन्या मणिवारणानि यन्त्रैर्धारासलिलं क्षिपन्ति ।
पतन्ति ताश्च प्रियाणामङ्के मनोभुवो वारणबाणकल्पाः ॥
इमा मषीकज्जलश्यामकायास्तीक्ष्णाक्षिचापाश्च विलासिन्यः ।
पुलिन्दरूपेण जनस्य हासं समयूरपिच्छाभरणाः कुर्वन्ति ॥
इतो महामांसबलिधारिण्यो हुङ्कारफेत्काररवा रौद्राः ।
निशाचरीणां प्रतिशीर्षकैरन्याः श्मशानाभिनयं कुर्वन्ति ॥

तुल्यबाहुबलाः, रेखया विभक्ताः, अणुमात्रमपि अस्खलिता इति भावः, द्वाभ्यां पङ्क्तिभ्यां श्रेणिभ्यां लयस्य तालस्य च मध्यो यत्र तत् यथा तथा परस्परम् अन्योऽन्यं साभिमुखाः आभिमुख्येन स्थिताः भवन्ति ॥ १२ ॥

अन्याः नर्त्तक्यः मणिवारणानि रत्नखचितकवचानि मुक्त्वा त्यक्त्वा यन्त्रैः धारासलिलं क्षिपन्ति मुञ्चन्ति, ताश्च सलिलधारा इत्यर्थः, प्रियाणां तत्कान्तानाम् अङ्के मनोभुवः कामस्य वारणबाणकल्पाः वारणास्त्रतुल्याः सत्यः पतन्ति ॥ १३ ॥

मषीवत् कज्जलवच्च श्यामाः कायाः यासां तथोक्ताः कृष्णवर्णा इत्यर्थः, तीक्ष्णे अक्षिणी चापो धनुरिव यासां तथाविधाः, समयूरपिच्छाभरणाः मयूरपिच्छाभरण-शोभिता इत्यर्थः, इमाः विलासिन्यः पुलिन्दरूपेण व्याधरूपेण जनस्य हासं कुर्वन्ति जनयन्ति ॥१४॥

अन्याः, नार्य्य इति शेषः, इतो महामांसं नरमांसमेव बलिम् उपहारं धारयन्तीति तथोक्ताः, हुङ्कारा एव फेत्काररवाः शृगालध्वनयः यासां तथाविधाः, अत एव रौद्राः भीषणाः सत्यः, निशाचरीणां पिशाचीनां राक्षसीनां वा प्रतिशीर्षकैः प्रतिरूपैः श्मशानस्य अभिनयं प्रदर्शनव्यापारं कुर्वन्ति ॥ १५ ॥

कावि वाइदकरालहुडुक्कारम्भमद्दलरएण मिअच्छी ।
भूलदाहिं परिवाटिवलाहिं चेटिकम्मकरणम्मि पउत्ता ॥ १६ ॥
किंकिणीकिदरणज्झणसद्दा कंठगीदलअजंतिदताला ।
जोगिणीवलअणच्चणकेलिं तालणेउररअं विरअंति ॥ १७ ॥
कोदुहल्लवसचंचलवेसा वेणुवादणपरा अवराओ ।
कालवेसवसहासिदलोआ ओसरंति पणमंति हसंति ॥ * ॥ १८ ॥

[ प्रविश्य ] ।

सारङ्गिका । [ पुरोऽवलोक्य ] । एसो महाराओ उणो मरगअ-कुंजं ज्जेव्व गदो, कदलीघरं अ अणुप्पइट्ठो ; ता अग्गदो गदुअ देवीविसज्जिअं विण्णवेमि । [ उपसृत्य ] । जअदु जअदु

काऽपि वादितकरालहुडुक्का रम्यमर्दलरवेण मृगाक्षी ।
भ्रूलताभ्यां परिपाटीचलाभ्यां चेटीकर्मकरणे प्रवृत्ता ॥
किङ्किणीकृतरणज्झणशब्दाः कण्ठगीतलययन्त्रिततालाः ।
योगिनीवलयनर्तनकेलिं तालनूपुररवं विरचयन्ति ॥
कौतूहलवशचञ्चलवेशा वेणुवादनपरा अपराः ।
कालवेशवशहासितलोका अपसरन्ति प्रणमन्ति हसन्ति ॥

काऽपि मृगाक्षी हरिणनयना, नर्तकीति शेषः, रम्येण मनोहरेण मर्दलस्य वादित्र-भेदस्य रवेण वादितं नादितं करालं भीषणं हुडुक्कं "हुडुक्को" इति प्रसिद्धं वाद्यविशेषं ध्वनति यावत् यया तथोक्ता, मर्दलध्वनिना प्रतिहततया वाद्यविशेषस्य रणनमिति भावः, परिपाट्या भङ्गिविशेषेण चलाभ्यां भ्रूलताभ्यां चेटीनां सहचरीणां कर्मकरणे प्रवृत्ता ॥ १६ ॥

किङ्किण्या क्षुद्रघण्टिकया कृतः रणझणशब्दः याभिः तथोक्ताः, कण्ठेषु गीतस्य लयेन यन्त्रितः नियमितः तालः याभिः तथाविधाः, योगिनीनां परिव्राजिकानां वलयेन यत् नर्तनं तदेव केलिः क्रीडा तं तालेन नूपुरयोः रवो यस्मिन् तत् यथा तथा विरच-यन्ति कुर्वन्ति ॥ १७ ॥

कौतूहलस्य वशेन चञ्चलः वेशः यासां तथोक्ताः, वेणुर्वंशीवाद्यं तस्य वादनपराः वादनासक्ताः, अपराः कामिन्यः कालवेशवशेन मलिनवेशवशेन हासिता लोकाः याभिः तथाभूताः सत्यः, अपसरन्ति प्रणमन्ति हसन्ति च ॥ १८ ॥

देवो। देवी एदं विण्णवेदि जधा "संझासमए जूअं मए परिणे-दव्वा"। †

विदूषकः। भो! किं एदं अकालकोहंडपडणं? ‡

राजा। सारंगिए! सव्वं वित्थरेण कधेहि। §

सारङ्गिका। एव्वं विण्णवीअदि, अणंतरातिक्कंतचउद्दसी-दिअहे देवीए पोम्मराअमणिमई गोरी कदुअ भेरवाणंदेण प्पडि-ट्ठाविदा, सअं अ दिक्खा गहिदा। तदो ताए विण्णत्तो जोगी-स्सरो गुरुदक्खिणाणिमित्तं। भणिदं अ तेण, जइ अवस्सं गुरु-दक्खिणा दादव्वा, ता एसा दीअदु महाराअस्स। तदो देवीए विण्णत्तं, जं आदिसदि भअवं। उणो वि उल्लविदं तेण, अत्थि एत्थ लाटदेसे चंडसेणो णाम राजा, तस्स दुहिदा घणसार-मंजरी णाम, सा देवण्णेहिं आदिट्ठा, एसा चक्कवट्टिघरिणी भवि-स्सदि त्ति; तदो महाराअस्स परिणेदव्वा, तेण गुरुदक्खिणा दिण्णा भोदि, भट्टा वि चक्कवट्टी किदो भोदि। तदो देवीए विहसिअ भणिअं, जं आदिसदि भअवं। अहं च विण्णविदुं पेसिदा गुरुस्स गुरुदक्खिणाणिमित्तं। ¶ (ज)

---

† एष महाराजः पुनर्मरकतकुञ्जमेव गतः, कदलीगृहञ्च अनुप्रविष्टः; तदग्रतो गत्वा देवीविज्ञापितं विज्ञापयामि। जयतु जयतु देवः। देवी इदं विज्ञापयति यथा "सन्ध्यासमये यूयं मया परिणेतव्याः"।

‡ भोः! किमेतदकालकूष्माण्डपतनम्?

§ सारङ्गिके! सर्वं विस्तरेण कथय।

¶ एवं विज्ञाप्यते, अनन्तरातिक्रान्तचतुर्दशीदिवसे देव्या पद्मरागमणिमयी गौरी कृत्वा भैरवानन्देन प्रतिष्ठापिता, स्वयञ्च दीक्षा गृहीता। ततस्तया विज्ञप्तो योगीश्वरो गुरुदक्षिणानिमित्तम्। भणितञ्च तेन, यद्यवश्यं गुरुदक्षिणा दातव्या, तद्देया दीयतां महाराजस्य। ततो देव्या विज्ञप्तं, यदादिशति भगवान्। पुनरपि उल्लपितं तेन, अस्ति अत्र लाटदेशे चण्डसेनो नाम राजा, तस्य दुहिता घनसारमञ्जरी नाम, सा दैवज्ञैः आदिष्टा, एषा चक्रवर्तिगृहिणी भविष्यतीति; ततो महाराजस्य

विदूषकः। [विहस्य]। एदं तं संविधाणअं सीसे सप्पो, देसंतरे वेज्जो। इह अज्ज विवाहो, लाटदेसे घणसारमंजरी। * (झ)

राजा। किं ते भेरवाणंदस्स प्पहाओ ण प्पच्चक्खो?। [तां प्रति]। कहिं संपदं भेरवाणंदो?। † (ञ)

सारङ्गिका। देवीकारिदप्पमदुज्जाणस्स मज्झट्ठिदवडतरुमूले चामुंडाअदणे भेरवाणंदो देवो अ आअमिस्सदि; ता अज्ज दक्खिणाविहिदो कोदुहलवरो विवाहो; ता इह ज्जेव्व देवेण ठादव्वं। ‡ (ट)

[इति परिक्रम्य निष्क्रान्ता]।

परिणेतव्या, तेन गुरुदक्षिणा कृता भवति, भवानपि चक्रवर्त्ती कृतो भवति। ततो देव्या विहस्य भणितं, यत् आदिशति भगवान्। अहञ्च विज्ञापयितुं प्रेषिता गुरोर्गुरुदक्षिणानिमित्तम्।

* एतत्तत् संविधानकं शीर्षे सर्पः, देशान्तरे वैद्यः। इहाद्य विवाहः, लाटदेशे घनसारमञ्जरी।

† किन्ते भैरवानन्दस्य प्रभावो न प्रत्यक्षः?। कुत्र साम्प्रतं भैरवानन्दः?।

‡ देवीकारितप्रमदोद्यानस्य मध्यस्थितवटतरुमूले चामुण्डायतने भैरवानन्दो देवी च आगमिष्यति; तदद्य दक्षिणाविहितः कौतूहलपरो विवाहः; तदिहैव देवेन स्थातव्यम्।

(ज) अनन्तरा अव्यवहिता अतिक्रान्ता विगता या चतुर्दशीतिथिः तद्दिवसे। गौरी दुर्गामूर्तिरित्यर्थः। दीक्षा संस्कार इत्यर्थः, भैरवानन्द गुरुं कृत्वा तस्मात् इष्टमन्त्रो गृहीत इति भावः। एषा घनसारमञ्जरी। उपस्थितम् उक्तम्। तेन भैरवानन्देन। चक्रवर्त्ती सार्वभौमः कृतः, त्वमिति शेषः।

(झ) संविधानकं व्यापारः।

(ञ) भैरवानन्दः योगबलेन इदानीमेव तां घनसारमञ्जरीमिहानेतुं शक्नोतीति भावः।

(ट) देव्या कारितं यत् प्रमदोद्यानं तस्य। चामुण्डा काली तस्या आयतने मन्दिरे।

राजा। वअस्स! सव्वं एदं भेरवाणंदस्स विजिंभिदं त्ति तक्केमि। * (ठ)

विदूषकः। एव्वं णेदं। ण क्खु मिअलंछणमंतरेण चंदो मिअंकमणिपुत्तलिअं पस्सेदअदि। ण क्खु सरअसमीरमंतरेण सेफालिआकुसुमुक्करं विआसेदि। † (ड)

[ ततः प्रविशति भैरवानन्दः ]।

भैरवानन्दः। इअं सा वडतरुमूले णिब्भिण्णस्स सुरंगादुआरस्स पिहाणं चामुंडा। (ढ) [ श्लोकं प्रणम्य पठति ]।—

कप्पंतकेलिभवणे कालस्स पुराणरुहिरसुरम्।
जअदि पिअंती चंडी परमेट्ठिकवालचसएण॥ १९॥

[ उपविश्य ]। अज्जवि ण णिग्गच्छदि सुरंगादुआरेण कप्पूरमंजरी। ‡

---

* वयस्य! सर्वमेतत् भैरवानन्दस्य विजृम्भितमिति तर्कयामि।

† एवमेतत्। न खलु मृगलाञ्छनमन्तरेण चन्द्रो मृगाङ्कमणिपुत्तलीं प्रस्वेदयति। न खलु शरत्समीरमन्तरेण शेफालिकाकुसुमोत्करं विकासयति।

‡ इयं सा वटतरुमूले निर्भिन्नस्य सुरङ्गाद्वारस्य पिधानं चामुण्डा।—

कल्पान्तकेलिभवने कालस्य पुराणरुधिरसुराम्।
जयति पिबन्ती चण्डी परमेष्ठिकपालचषकेण॥

अद्यापि न निर्गच्छति सुरङ्गाद्वारेण कर्पूरमञ्जरी।

(ठ) विजृम्भितं विलसितम्।

(ड) मृगलाञ्छनं चन्द्रम् अन्तरेण विना, मृगाङ्कमणिपुत्तलीं चन्द्रकान्तमणिपुत्तलिकां प्रस्वेदयति आर्द्रयति। शरत्समीरं शारदीयपवनम् अन्तरेण विना। विकासयति, अन्यसमयवायुरिति शेषः।

(ढ) निर्भिन्नस्य उद्घाटितस्य। पिधानम् आच्छादनम्, आवरणभूतेति यावत्, चामुण्डा काली। तस्या दर्शनेनैव सुरङ्गाद्वारमावृतमिति भावः।

कालस्य महाकालरूपिणो रुद्रस्य कल्पान्त एव संहारकाल एव केलिभवनं क्रीडामन्दिरं तस्मिन् चण्डी महाकाली परमेष्ठिनो ब्रह्मणः कपालचषकेण कपाल-

[ततः प्रविशति सुरङ्गोद्घाटितकेन कर्पूरमञ्जरी]।

कर्पूरमञ्जरी। भअवं! पणमिज्जसि।

भैरवानन्दः। उइदं वरं लहेसु। इह ज्जेव्व उवविसदु। †

[कर्पूरमञ्जरी तथा करोति]।

भैरवानन्दः। [स्वगतम्]। अज्ज वि ण आअच्छदि देवी। ‡

[प्रविश्य]।

राज्ञी। [परिक्रम्य अवलोक्य च]। इअं भअवदी चामुंडा। [प्रणम्य अवलोक्य च]। अए! इअं कप्पूरमंजरी!! ता किं णेदं?। [भैरवानन्दं प्रति]। इदं विण्णवीअदि, णिअभवणे कदुअ विवाहसामग्गिं आअदम्हि, तदो तं गेण्हिअ आअमिस्सं। §

भैरवानन्दः। वच्छे! एव्वं करीअदु। ¶

[राज्ञी आदाय परिक्रामति]।

भैरवानन्दः। [विहस्य स्वगतम्]। इअं कप्पूरमंजरीठाणं अण्णेसिदुं गदा। [प्रकाशम्]। पुत्ति कप्पूरमंजरि! सुरंगादुआरेण ज्जेव्व तुरिदपदं गदुअ सट्ठाणे चिट्ठ, देवीआअमणे उणो आअंतव्वं। **

[कर्पूरमञ्जरी तथा करोति]।

---

* भगवन्! प्रणम्यसे।

† उचितं वरं लभस्व। इहैव उपविश।

‡ अद्यापि नागच्छति देवी।

§ इयं भगवती चामुण्डा। अयि! इयं कर्पूरमञ्जरी!! तत् किमिदम्? इदं विज्ञाप्यते, निजभवने कृत्वा विवाहसामग्रीम् आगताऽस्मि, ततस्तां गृहीत्वा आगमिष्यामि।

¶ वत्से! एवं क्रियताम्।

** इयं कर्पूरमञ्जरीस्थानमन्वेष्टुं गता। पुत्रि कर्पूरमञ्जरि! सुरङ्गाद्वारेणैव त्वरितपदं गत्वा स्वस्थाने तिष्ठ, देव्यागमने पुनरागन्तव्यम्।

---

चषकपात्रेण पुरा कदापि सुरा पूर्वतनमासिना ओष्ठितरूपमस्य पिबतो जयति कर्पोलावेव वर्तते ॥ १९ ॥

देवी । एदं रक्खागिहं । [प्रविश्यावलोक्य च] । अए ! इअं कप्पूरमंजरी !! सा का वि सारिच्छा मए दिट्ठा ! वच्छे कप्पूरमंजरि ! कीरिसं दे सरीरं ? । [आकाशे] । किं भणासि, मह सरीरे वेअणा ? । [स्वगतम्] । ता उणो तहिं गमिस्सं । [प्रविश्य पार्श्वतोऽवलोक्य च] । हला सहीओ ! विवाहोवअरणाइं लहु गेण्हिअ आअच्छध । [इति परिक्रामति] । * (ण)

[प्रविश्य कर्पूरमञ्जरी तथैवास्ते] ।

राजा । [पुरोऽवलोक्य] । इअं कप्पूरमंजरी !! । †

भैरवानन्दः । वच्छे ! विब्भमलेहाए आणीदाइं विवाहोवअरणाइं ? ‡

देवी । आणीदाइं । किं उण घणसारमंजरीसमुचिदाइं आहरणाइं विसुमरिदाइं । ता उणो गमिस्सं । §

भैरवानन्दः । एव्वं करीअदु । ¶

[देवी नाटितकेन निष्क्रामति] ।

---

* इदं रक्षागृहम् । अयि ! इयं कर्पूरमञ्जरी !! सा कापि सदृशी मया दृष्टा । वत्से कर्पूरमञ्जरि ! कीदृशं ते शरीरम् ? किं भणसि, मम शरीरे वेदना ? । तत् पुनस्तत्र गमिष्यामि । हला सख्यः ! विवाहोपकरणानि लघु गृहीत्वा आगच्छत ।

† इयं कर्पूरमञ्जरी !!

‡ वत्से ! विभ्रमलेखया आनीतानि विवाहोपकरणानि ? ।

§ आनीतानि । किं पुनर्घनसारमञ्जरीसमुचितानि आभरणानि विस्मृतानि । तत्पुनर्गमिष्यामि ।

¶ एवं क्रियताम् ।

(ण) आकाशे इति ।—"किं ब्रवीषि ? इत्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम् ।" इति भरतमुनिः ।

भैरवानन्दः। पुत्ति कप्पूरमंजरि! तह ज्जेव्व करीअदु। *

[कर्पूरमञ्जरी निष्क्रान्ता]।

राजा। [दर्पणगृहं प्रविश्य कर्पूरमञ्जरीं दृष्ट्वा]। अए! सारिच्छएण विड़ंबिदम्हि !!। [आत्मगतम्]। झाणविमाणेण णिव्विग्घपरिसप्पिणा ताम आणेदि महाजोई। [प्रकाशम्]। सहीओ! जं जं णिवेदिदं, तं तं गेण्हिअ आअच्छध। [चामुण्डायतनप्रवेशनाटितकेन तामवलोक्य]। अहो सारिच्छअं !!। † (त)

भैरवानन्दः। देवि! उवविस। महाराओ वि आअदो ज्जेव्व वट्टदि। ‡

[ततः प्रविशति राजा विदूषकः सारङ्गिका च]।

भैरवानन्दः। आसणं महाराअस्स। §

[सर्वे यथोचितमुपविशन्ति]।

राजा। [नायिकां प्रति]। एसा मरीइणो मअरद्धअ-पाणिद्धिआ, देहांतरेण संट्ठिदा सिंगाररसलच्छीव? दिअस-संचारिणी पुण्णिमाचंदचंदिआ; अवि अ प्पगुणगुणमाणिक्क-मंजूसा, रअणमई अंजणसलाआ, तधा अ एसा रअण-कुसुममणिप्पसा महुलच्छी। (थ) किं च—

* पुत्रि कर्पूरमञ्जरि! तथैव क्रियताम्।

† अये! सादृश्येन विडम्बितोऽस्मि !! ध्यानविमानेन निर्विघ्नपरिसर्पिणा तामानयति महायोगी। सख्यः! यत् यन्निवेदितं, तत्तत् गृहीत्वा आगच्छत। अहो! सादृश्यम् !!।

‡ देवि! उपविश। महाराजोऽपि आगत एव वर्त्तते।

§ आसनं महाराजस्य।

¶ एषा मरीचिनो मकरध्वजपाणिद्धिका, देहान्तरेण संस्थिता शृङ्गाररस-लक्ष्मीरिव, दिवससञ्चारिणी पूर्णिमाचन्द्रचन्द्रिका; अपि च प्रगुणगुणमाणिक्य-मञ्जूषा, रत्नमयी अञ्जनशलाका, तथा चैषा रत्नकुसुमनिष्पन्ना मधुलक्ष्मीः। किञ्च—

(त) सादृश्येनेति।—सादृश्येन समरूपत्वेन। विडम्बिता विप्रलब्धा। निर्विघ्नं निर्बाधं यथा तथा परिसर्पति प्रसरतीति तथोक्तेन।

राणी। अज्जउत्त! एसो उवज्झाओ अज्जकविंजलओ चिट्ठदि; ता करेदु अग्गिआरिअं। * (न)

विदूषकः। एस सज्जोम्हि। भो वअस्स! उत्तरीए गंठिं दाइस्सं, दाव हत्थेण हत्थं गेण्ह कप्पूरमंजरीए। †

राणी। [सचमत्कारम्]। कुदो कप्पूरमंजरी!!। ‡

भैरवानन्दः। [तं तथा भावमुपलक्ष्य विदूषकं प्रति]। तुमं सुट्ठुतरं भुल्लोसि, जदो कप्पूरमंजरीए घणसारमंजरीत्ति णामंतरं जाणासि। §

राजा। [करमादाय]।—

जे कंटआ तिउसमुद्धफलाणं संति
जे केदईकुसुमगब्भदलावलीसु।
फंसेण णूणमिह मज्झ सरीरअस्स।
ते सुंदरीअ बहला पुलअंकुराओ॥ ण ॥२१॥

---

* आर्य्यपुत्र! एष उपाध्याय आर्य्यकापिञ्जलस्तिष्ठति; तत् करोतु अग्न्या-चार्य्यकम्।

† एष सज्जोऽस्मि। भो वयस्य! उत्तरीये ग्रन्थिं दास्यामि, तावद्धस्तेन हस्तं गृहाण कर्पूरमञ्जर्याः।

‡ कुतः कर्पूरमञ्जरी?

§ त्वं सुष्ठुतरं भ्रान्तोऽसि, यतः कर्पूरमञ्जर्या घनसारमञ्जरीति नामान्तरं जानासि।

ये कण्टकास्त्रपुसमुग्धफलानां सन्ति
ये केतकीकुसुमगर्भदलावलीषु।
स्पर्शेन नूनमिह मम शरीरस्य
ते सुन्दर्य्याः बहलाः पुलकाङ्कुराः॥

(ध) उपाध्यायः पुरोहितः। आचार्य्यताम् आह्वयताम्।

(न) अग्न्याचार्य्यकः अग्नेः आचार्य्यः अग्न्याचार्य्यः, स एवेति अग्न्याचार्य्यकः; पुरोहितः इत्यर्थः; तम्।

त्रपुषस्य "[illegible]" इति ख्यातफलविशेषस्य मुग्धानि सुन्दराणि कोमलानि

विदूषकः। भो वअस्स! भामरीओ दिज्जदु। (प) हुदवहे लाजंजलीओ खिवीअदु! *

[ राजा भ्रमणं नाटयति। नायिका धूमेन व्याकुलमुखी तिष्ठति। राजा परिक्रामति। राज्ञी सपरिवारा निष्क्रान्ता ]।

भैरवानन्दः। विवाहे दक्खिणा दिज्जदु आचारिअस्स। †

राजा। दिज्जदु। वअस्स! गामसअं ते दिस्सं। ‡

विदूषकः। सोत्थि होदु। § [ इति नृत्यति ]।

भैरवानन्दः। महाराअ! किं ते उणो वि प्पिअं कुणोमि?। ¶

राजा। जोईस्सर! किमवरं प्पिअं वट्टदि? जदो—

कुंतलेस्सरसुआकरप्फंसप्फारमोक्खसिद्धिकिदसग्गो।
पालएमि वसुहातलरज्जं चक्कवट्टिपदवोरमणिज्जं॥ २२॥

तहावीदं होदु दाव—

* भो वयस्य! भामर्यो दीयन्ताम्। हुतवहे लाजाञ्जलयः क्षिप्यन्ताम्।

† विवाहे दक्षिणा दीयताम् आचार्यस्य।

‡ दीयते। वयस्य! ग्रामशतं ते दत्तम्।

§ स्वस्ति भवतु।

¶ महाराज! किन्ते पुनरपि प्रियं करोमि?।

** योगीश्वर! किमपरं प्रियं वर्तते? यतः—

कुन्तलेश्वरसुताकरस्पर्शस्फारमोक्षसिद्धिकृतस्वर्गः।
पालयामि वसुधातलराज्यं चक्रवर्तिपदवीरमणीयम्॥

तथाऽपि इदं भवतु तावत्—

---

यानि फलानि तेषां ये कण्टकाः सूक्ष्माग्राः अवयवविशेषाः सन्ति, केतकीकुसुमानां समुद्भवावस्थायां भन्मांग्रपत्रराजिषु ये, कण्टकाः सन्तीति पूर्वेणान्वयः, ते सर्वे, कुमारिम्पर्शवशात्, रूढ पारिणयने इति शेषः, सुन्दर्याः कर्पूरमञ्जर्याः अङ्गेन मम शरीरस्य बहुलाः बहवः पुलकाङ्कुराः रोमाञ्चनिकराः॥ २१॥

(प) भामर्यः अग्निप्रदक्षिणोपचाराणि, दीयन्तां क्रियन्ताम्।

सच्चे णंदटु सज्जणाणं सअलो वग्गो खलाणं पुणो
णिच्चं खिज्जदु होंतु बम्हणजणा सच्चासिसो सव्वदा।
मेहो मुंचदु संचिदं पि सलिलं सस्सोचिदं भूदले
लोओ लोहपरम्मुहोऽणुदिअहं धम्मे मई भोदु अ ॥**॥२३॥

[ इति निष्क्रान्ताः सर्वे ]।

इति चतुर्थं जवनिकान्तरम्।

इति श्रीराजशेखरविरचिता कर्पूरमञ्जरी समाप्ता।

सत्ये नन्दतु सज्जनानां सकलो वर्गः खलानां पुन-
र्नित्यं खिद्यतु भवन्तु ब्राह्मणजनाः सत्याशिषः सर्वदा।
मेघो मुञ्चतु सञ्चितमपि सलिलं सस्योचितं भूतले
लोको लोभपराङ्मुखोऽनुदिवसं धर्मे मतिर्भवतु च ॥

कुन्तलेश्वरस्य सुता कर्पूरमञ्जरी तस्याः करग्रहेण यत् स्फारं निरतिशयं सौख्यं सुखसन्तानः, तेन निर्विशेषीकृतः तुच्छीकृत इति यावत्, स्वर्गो येन तथाभूतः यत् चक्रवर्तिनः सार्वभौमस्य पदव्याः पदप्राप्त्या रमणीयं मनोज्ञं वसुधातलराज्यं पालयामि ॥ २२ ॥

सत्ये इति।—सज्जनानां साधूनां सकलः वर्गः गणः सत्ये नन्दतु आनन्दमनुभवतु, पुनः किन्तु खलानां दुर्जनानां सकलो वर्गः नित्यं सततं खिद्यतु दुःखमनुभवतु इत्यर्थः। ब्राह्मणजनाः सर्वदा सत्याशिषः सफलाशीर्वादाः भवन्तु। मेघः सञ्चितमपि सलिलं भूतले सस्योचितं मुञ्चतु त्यजतु, यदि च सञ्चितधनत्यागो लोकानां दुष्करः, तथाऽपि यावता सस्योत्पत्तिर्भवेत्, तावत्परिमितस्य सलिलस्य दानं मेघस्य समुचितकर्तव्यमिति भावः। लोकः अनुदिवसं लोभपराङ्मुखः तथा धर्मे मतिश्च, लोकानामिति शेषः, भवतु। "सत्ये" इत्यत्र "सार्थः" इति पाठे—सज्जनानां सार्थः समूह इत्यर्थः, "भवतु ब्राह्मणजनः" इति पाठे—सत्याशीरिति संस्कृतम् ॥ २२ ॥

इति पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचिता कर्पूरमञ्जरीव्याख्या समाप्ता।

---

समाप्तोऽयं ग्रन्थः।